॥ श्रीगणेशायनम॰ ॥ ॥ शिवमभयमनाद्यनंतमध्यंपरमसुखाद्वयबोधमात्रसारम् ॥ उपरतसकलभ्रमंविशुद्धंनिजमहसास्फुरदात्मतत्त्वमीडे ॥ १ ॥ उत्पत्तिस्थित्युपशमाख्यैस्त्रि भि प्रकरणैर्जगज्जन्मस्थितिलयबोधकानांअथातआदेशोनेतिनेतीत्यादिसर्वप्रपंचनिषेधकानांचवेदांतवाक्यानामध्यारोपापवादन्यायेनात्मतत्त्वव्युत्पादकतयावासनाक्षयम नोनाशपर्यंतज्ञानेनपरमपुरुषार्थेतात्पर्यपर्यवसानदर्शितम् ॥ अथेदानीयत्रनान्यत्पश्यतिनान्यच्छृणोतिनान्यद्विजानातिसभूमायोवैभूमातत्सुखम् यतोवाचोनिवर्त्तंतेअप्राप्यम नसासह आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चन तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूः निष्कलनिष्क्रियशांतनिरवद्यनिरंजनम् अमृतस्यपरसेतुंदग्धेंधनमिवान लमित्यादिश्रुतितात्पर्यसिद्धप्रागुक्तसर्वसाधनसाध्यसाक्षात्कारज्ञानफलनिर्वाणव्युत्पादयितुनिर्वाणाख्यमिदंप्रकरणंश्रावयितुभगवान्श्रीवाल्मीकिरुवाच ॥ तत्राद्यसर्गे ॥ मुनि वाक्यादिहोत्थानश्रोतृणामाह्निकक्रिया ॥ श्रुतार्थचिंतानिद्राभ्यांरात्रियापनमीर्यते ॥ १ ॥ तत्रादौपूर्वोत्तरप्रकरणयोर्हेतुतासंगतिसूचयन्वक्तव्यंप्रतिजानीते ॥ उपशमेति ॥ जगज्जन्मस्थितिभंगहेतुत्वरूपश्रुत्युक्ततटस्थलक्षणस्यमृल्लोहविस्फुलिंगादिदृष्टांतैर्वाचारंभणविकारोनामधेयंत्रीणिरूपाणीत्येवसत्यमितिश्रुतिप्रदर्शितन्यायैर्नैवान्नेनसोम्यशुंगे

॥ श्रीगणेशायनमः ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ उपशमप्रकरणादनंतरमिदंश्रृणु ॥ त्वंनिर्वाणप्रकरणंज्ञातंनिर्वाणदायियत् ॥ १ ॥ कथयत्येवमुद्दामवचनेमुनिनायके ॥ श्रवणैकरसेमौनास्थितेराजकुमारके ॥ २ ॥ मुनिवागर्थनिक्षिप्तमनस्यस्ततपःक्रिये ॥ राजलोके गतस्पंदेचित्रार्पितइवास्थिते ॥ ३ ॥ वसिष्ठवचसामर्थंविचारयतिसादरम् ॥ लसदंगुलिभंगेनमुनिसार्थेस्फुरद्भ्रुवि ॥ ४ ॥ विस्मयालोक नोल्लासप्रोत्फुल्लनयनालिनि ॥ पुरंध्रिवर्गेगंभीरतरुमंजरितांगते ॥ ५ ॥ खेवासरचतुर्भागदेशेदिनकरेस्थिते ॥ किंचिज्ज्ञानोदयात्सौम्ये किंचिच्छममुपेयुषि ॥ ६ ॥

नापोमूलमन्विच्छाद्भिःसोम्यशुंगेनतेजोमूलमन्विच्छतेजसासोम्यशुंगेनसन्मूलमन्विच्छसन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाःसयएषोणिमैतदात्म्यमिदंसर्वंतत्सत्यं सआत्मेतिश्रुतितात्पर्यविषयेऐकात्म्येपर्यवसानव्युत्पादनपरप्रकरणत्रयानंतरतत्फलीभूतस्यसत्यज्ञानमनंतंब्रह्म नित्यविज्ञानमानंदंब्रह्म आनंदोब्रह्मेतिव्यजानादित्यादिश्रुतिद र्शितस्वरूपलक्षणस्य तत्त्वमसिश्वेतकेतो अयमात्माब्रह्मसर्वानुभूरित्यादिमहावाक्यार्थस्यतद्बोधफलनिर्वाणस्वरूपस्यचव्युत्पादकत्वान्निर्वाणाख्यप्रकरणंश्रृण्वित्यर्थः ॥ १ ॥ प्रतिज्ञातमर्थंप्रस्तुतकथामेवावलंब्यवर्णयिष्यन्नुपशमप्रकरणोपदेशातेदशरथसभायायद्वृत्तंतदाह ॥ कथयतीत्यादिना ॥ सर्वेषामस्तमयतानांभेरीपटहशंखवानांध्वनिरासीदिति षोडशस्थेनान्वयः ॥ मुनिनायकेवसिष्ठे ॥ राजकुमारकेरामे ॥ २ ॥ अस्तात्यक्तातपोमानसबाह्यार्थालोचनक्रियाशरीरचेष्टाचयेन ॥ तदेवाह ॥ गतस्पंदेइति ॥ ३ ॥ अंगुलि भंगेनउत्क्षिप्ततर्जनीचेष्टाभिनयेन ॥ स्फुरद्भ्रुविसभ्रूभंगमितियावत् ॥ ४ ॥ विस्मयःपरमाश्चर्यरूपप्रत्यगात्मातदालोकनोल्लासेनगंभीरामकरंदास्वादनासक्तभ्रमरैर्निष्कंपशब्दाया तरुमंजरीतद्भावमिवगते ॥ ५ ॥ यत्रवासरस्यचतुर्थभागमात्रावशेषोलक्ष्यतेतस्मिन्देशेप्रदेशेश्रवणायेवस्थिते अतएवकिंचिज्ज्ञानोदयादिनसौम्येदृष्टिप्रियेकिंचित्तापोपशममुपे युषीवेत्युत्तरादनुकृष्यान्वयः ॥ ६ ॥

श्रवणायमर्संगनिद्दत्येतदेहलीदीप न्यायेनमश्नीत्यथापिसबध्यते ॥ कुसुमवितानस्पंदेनमालितेसग्विणि ॥ अतएवमदारमधुरामोददायिनि ॥ ७ ॥ ८ ॥ मुक्तामयानांजालक
लापानांजालाकारवातायनानांअंतर्गतासुअंतरभूमिषुमध्यस्थवापीप्रदेशेषुश्रोतुमास्थितेसोत्कंठइवअपगतस्पंदनिश्चलकषतिमुक्ताविभाभिर्दीप्यमानेसति ॥ ९ ॥ अथुपुर
विरश्मिपुशीतस्यगृहांतरंश्रवणशालामध्यविश्रामायमिवप्रविष्टेषु ॥ देशान्तकालतश्चआदीर्घनभसिपांथेषुचिरदूरप्रचारश्रांतिप्विवतियावत् ॥ १० ॥ शाम्यतोदिनस्यदेहभूते
मुक्ताजालकानांप्रभाजाललक्षणेनभस्मनाउद्धूलितात्मनितदंतःप्रविष्टविशातपेतपस्विलक्षणेनस्वात्मनिरामशांतिगुणशंसतिसूचयतीवसति ॥ ११ ॥ भूभृतांराज्ञांकरेपाणौशे
खरेषुशिरस्सुचस्थितेषुलीलासरोजेषुशोभनारसायस्मिस्तस्मरसभसिद्धोपदेशश्रुत्वाआमोदावानदाभिर्मावासेपामनःस्विवअवृत्तिषुनिमीलनोन्मुखेषुसत्सु ॥ १२ ॥ लीलापक्षि
श्रवणायेवमशांतेवितानस्पदमालिते ॥ मौनमरुतिमदारमधुरामोददायिनि ॥ ७ ॥ पुष्पदामसुपुप्तासुमहाभ्रमरपंक्तिपु ॥ ज्ञातज्ञेयत
यानूनंसम्यग्ध्यानवतीष्विव ॥ ८ ॥ मुक्ताजालकलापांतर्गतास्वंतरभूमिषु ॥ कचत्यपगतस्पंदतोयेश्रोतुमिवास्थिते ॥ ९ ॥ गृहांतरप्रवि
ष्टेषुगवाक्षेदूरमंशुषु ॥ विश्रामायमिवादीर्घनभःपांथेषुशीतलम् ॥ १० ॥ मुक्ताजालप्रभाजालभस्मनोद्धूलितात्मनि ॥ शंसतीवशम
शाम्यद्दिनदहेदिवातपे ॥ ११ ॥ करेलीलासरोजेषुशेखरेषुचभूभृताम् ॥ श्रुत्वासुरसमामोदादवृत्तिषुमनःस्विव ॥ १२ ॥ बालकेष्वञ्जलो
केषुलीलापक्षिषुसादरम् ॥ भोजनार्थंवधूलोकमुपरुधत्स्वनारतम् ॥ १३ ॥ भ्रमद्भ्रमरपक्षोत्थवातधूतरजस्वलम् ॥ कौमुदेपरिविश्रांते
चामरेष्वक्षिपक्ष्मसु ॥ १४ ॥ रश्मिष्वगगुहोन्मुक्तच्छायाजालभयादिव ॥ गवाक्षादिष्विवोड्डीयप्रविष्टेषुगृहांतरम् ॥ १५ ॥ आसीद्दिन
चतुर्भागसत्तावेदनतत्पर ॥ भेरीपटहशंखानादिङ्मुखापूरकोध्वनि ॥ १६ ॥ तेनतत्तारमप्याशुवचोंतर्धानमाययौ ॥ मौनंजलदनादे
त्रस्ताधालाधात्रीकुचांतरम् ॥ सारवप्रावृषीवाब्दा प्रोन्नतशृंगकोटरम् ॥ १९ ॥ उत्तस्थुरवतंसेभ्योभूभृतांभ्रमरस्रज ॥ ईषत्करालवा
हाभ्य सरिद्भ्योंबुकणाइव ॥ २० ॥
पुपंजरस्थशुकादिषु ॥ उपरुधत्सुत्वरयत्स्विनियाघत् ॥ १३ ॥ कौमुदेदीपविकाशोन्मुखकुमुदवनबंधिनिप्रमभ्रमराणांपक्षोत्थैर्वातैरुद्धूतेरजसिचामरेष्वक्षिपक्ष्मसुचपरितोविश्रांतेसति
॥ १४ ॥ सूर्यरश्मिषुअगानांमेर्वादिपर्वतानांगुहाभ्यउन्मुक्ताच्छायासमूहात्मकात्तमसोभयादिवउड्डीयपलाय्यगवाक्षादिपुद्वारेषुनिलयनायगृहांतरंगृहमध्यंप्रविष्टेष्विव ॥ १५ ॥
दिनचतुर्थभागस्यसत्तापरिशेषस्तस्यावेदनेतत्पर ॥ १६ ॥ तेनध्वनिनातत्तारमपिमुनेरिवमौनवासिष्ठवचःअन्तर्धानमाययौ ॥ १७ ॥ तरसाजवेनआसुभ्याधवलिताजातेत्य
थ ॥ आतालीपल्लवाआकंपितातालीवल्लाधनावलीव ॥ १८ ॥ सारवारोवनशब्दसहितयथास्यात्तथाशृंगकोटरंगुहामध्यमिव ॥ १९ ॥ ईषत्कराल क्षुब्धोबाहुःप्रवाहोया
सांतास्य ॥ भ्रमराणांरजोगौरत्वपोतनायांबुकणदृष्टांत ॥ २ ॥

१ वर्णवमिरास्थारनंधा

॥ २० ॥ ... हंसेनअं
वासरस्यवृद्धत्वेचतुर्थैवयसिप्राप्तेसति ॥ २१ ॥ प्रस्तुतंवस्तुवक्तव्यार्थंसहरन्नुपसंहरन् ॥२२॥ क्रोडीकृत्यहृदिरुध्वेतियावत् ॥ २३ ॥ अक्षीणःअक्षयोमद्गिरामर्थः ॥ हंसेनअं
भस अभःपरित्यज्येतिल्यब्लोपेपचमी ॥ २४ ॥ अनेनवासनाक्षयमनोनाशप्राणसरोधज्ञानाभ्यासपथा ॥ २५ ॥ २६ ॥ यथाअधस्त्यक्तदीपोवापुरुषोऽवटेगर्त्तेपततितद्वत्
॥ २७ ॥ अस्यमदुक्तार्थस्यसिद्धयेयथाप्राप्तोव्यवहारःअसगेनकार्यइत्येवसर्वशास्त्रपरमतात्पर्यविषयसिद्धांतमादायमनसिकृत्यउदारवानपरिच्छिन्नात्मबोधवान्भवेत्यर्थः

एवंप्रक्षुभितेतस्मिन्गृहेदाशरथेतदा ॥ प्राप्तेवासरवृद्धत्वेशांतशंखस्वनेशनैः ॥ २१ ॥ संहरन्प्रस्तुतंवस्तुवचोमधुरवत्तिमत् ॥ उवाचमुनि शार्दूलःसभामध्येरघूद्वहम् ॥ २२ ॥ राघवानघवाग्जालंमयैतत्प्रविसारितम् ॥ तेनचित्तखगंबध्वाक्रोडीकृत्यात्मतांनय ॥ २३ ॥ कच्चि द्गृहीतोभवतामद्गिरामर्थईदृशः ॥ त्यक्तादुर्बोधमक्षीणोहंसेनेवांभसःपयः ॥ २४ ॥ विचार्यैतदशेषेणस्वधियैवंपुनःपुनः ॥ अनेनैवपथा साधोगंतव्यंभवताधुना ॥ २५ ॥ अनयैवधियारामविहरन्नैवबध्यसे ॥ अन्यथाधःपतस्याशुविंध्यखातेयथागजः ॥ २६ ॥ सुगृहीतंधि यारामतद्वचोनकरोपिचेत् ॥ तत्पतस्यवटेत्यक्तदीपोवांधोनिशास्विव ॥ २७ ॥ असंगेनयथाप्राप्तोव्यवहारोस्यसिद्धये ॥ इत्येवशास्त्रसिद्धां तमादायोदारवान्भव ॥ २८ ॥ हेसभ्याहेमहाराजरामलक्ष्मणभूमिपाः ॥ सर्वएवभवंतोद्यतावद्यापारमाह्निकम् ॥ २९ ॥ कुर्वंत्वयंहि दिवसःप्रायःपरिणताकृतिः ॥ शेपंविचारयिष्यामोविचार्यंप्रातरागताः ॥ ३० ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ इत्युक्तामुनिनातेनसास वैवतदासभा ॥ प्रोत्तस्थौपद्मवदनासविकासेवपद्मिनी ॥ ३१ ॥ राजानःस्तुतराजानःकृतराघववंदनाः ॥ परिष्टुतेवसिष्ठेतेजग्मुरात्मनि वेशनम् ॥ ३२ ॥ विश्वामित्रेणसहितोवसिष्ठोगंतुमाश्रमम् ॥ उत्तस्थावासनाच्छ्रीमान्नमस्कृतनभश्वरः ॥ ३३ ॥ दशरथप्रभृतयोराजा नोमुनयस्तथा ॥ यथानुरूपंवक्तारमनुगम्यमुनिंचिरम् ॥ ३४ ॥ आपृच्छ्यकेचिद्गगनंययुःकेचिद्वनांतरम् ॥ केचिद्राजगृहंसंतोभृंगाःप द्मोत्थिताइव ॥ ३५ ॥ वसिष्ठपादयोस्त्यक्त्वापुष्पांजलिमनाविलम् ॥ दारैरनुगतोराजाप्रविवेशगृहांतरम् ॥ ३६ ॥ रामलक्ष्मणशत्रुघ्नाः प्राप्तस्यस्वाश्रमंगुरोः ॥ अभ्यर्च्यचरणौभक्त्यात्वाजग्मुर्नृपमंदिरम् ॥ ३७ ॥

॥ २८ ॥ २९ ॥ प्रातःश्वःसभायामागताःसतः ॥ धातुसबंधेप्रत्ययाइतिभविष्यतिक्तः ॥ ३० ॥ इतिउक्ताआज्ञप्ता ॥ पद्मानीवपद्मान्येवचवदनानियस्याः ॥ ३१ ॥ स्तुतोरा जादशरथोयैस्तेस्तुतराजानः ॥ वसिष्ठेपरिष्टुतेसर्वैःप्रणम्यप्रशसितेसति ॥ ३२ ॥ नमस्कृतानभश्वरादेवायेन ॥ ३३ ॥ वक्तारमुपदेष्टारम् ॥ चिरमाश्रमांतमनुगम्य ॥ ३४ ॥
॥ ३५ ॥ अनाविलनिर्मलम् ॥ ३६ ॥ ३७ ॥

सान्पितृंश्वआनघु ॥ विप्रान्अतिथीन्अभ्येयु ॥ अभिमुखआर्ययुरभिगमनादिनापूजनायस्वीचक्रुरित्यर्थ ॥ अभ्येतुरितिपाठेतुअभ्येतुरतिथिसर्गस्यमध्येविप्रानानचुरित्ये
वंयोज्यम् ॥ ३८ ॥ परिच्छदे परिवारे सह ॥ ३९ ॥ ४ ॥ ४१ ॥ ४२ ॥ भाविशुभसूचकत्वादुत्कृष्टस्वप्ने सुदरीरमणीयाम् ॥ तथाचश्रुतिरयमप्रदेवइवराजेवअहमेवेदसर्वो
स्मीतिमन्यतेसोस्यपरमोलोकइतिस्वात्मसार्वात्म्यदर्शनस्यभाविमोक्षफलसूचकत्वंदर्शयति ॥ विनार्थिनोरात्र्यतिक्रमणकामाइतियावत् ॥ ४३ ॥ ४४ ॥ ४५ ॥ अधिगतसा
रतयाआत्मतत्त्वप्रबोधेनउदित सविकासआशयोयेषारामादीनाम् ॥ धियामाराधि ॥ विरतिमुपरमअभजतप्राप ॥ अतएवारुणकिरणव्याप्त्यामलिनोनिशाकरएववक्त्रय

सदनानिसमासाद्यश्रोतार सर्वएवते ॥ सस्नुरानर्चुरभ्येयुर्देवान्विप्रान्पितृंस्तथा ॥ ३८ ॥ यथाक्रमंस्वभृत्यांतैर्विप्रायैश्चपरिच्छदे ॥ सम
युभुजिरेभोज्यंवणधर्मक्रमोदितम् ॥ ३९ ॥ अस्तंगतेदिनकरेसमदिवसकर्मभि ॥ अभ्यागतेरात्रिकरेसमंरजनिकर्मभि ॥ ४० ॥ स्थि
त्वातल्पेपुकौशेयशयनेष्वासनेपुच ॥ भूधरामुनिराजानोराजपुत्रामहर्षय ॥ ४१ ॥ संसारोत्तरणोपायंवसिष्ठवदनेरितम् ॥ यथावदे
काग्रधियश्चिंतयामासुरादृता ॥ ४२ ॥ तत प्रहरमात्रेणनिद्रामामुद्रितानना ॥ उत्स्वप्नसुंदरीमीयुःपद्माइवदिनार्थिन ॥ ४३ ॥ रामल
क्ष्मणशत्रुघ्ना प्रहरत्रयमेवतत् ॥ वासिष्ठमुपदेशंतेचिंतयामासुरक्षतम् ॥ ४४ ॥ प्रहरस्यार्द्धमात्रंतेततआमुद्रितेक्षणा ॥ उत्स्वप्नमाययु
र्निद्रांक्षणाद्विद्रावितश्रमाम् ॥ ४५ ॥ इतिशुभमनसांविवेकभाजामधिगतसारतयोदिताशयानाम् ॥ अभजतविरतितदात्रियामाम
लिननिशाकरवक्त्रतांजगाम ॥ ४६ ॥ ॥ इत्यार्षेवासिष्ठमहारामायणेवाल्मीकीयेदेवदूतोक्तेद्वात्रिंशत्साहस्र्यांसहितायांमोक्षोपायेपुनि
र्वाणप्रकरणेदिवसव्यवहारवर्णननामप्रथम सर्ग ॥ १ ॥ ॥ ५ ॥ ॥ श्रीवाल्मीकिरुवाच ॥ ॥ तत क्षिन्नेंदुवदनापर्या
कुलतमःपदा ॥ क्षीयमाणानभोश्यामाविवेकइववासना ॥ १ ॥ पूर्वध्वस्ततयालोकदृश्यमानेपरेचले ॥ शयालीकावतसांशंतापको
निकरोदधौ ॥ २ ॥ अवश्यायकणाकर्पीपराग्रेंदुमंडल ॥ ज्योत्स्नाकवलनालोकोषभौप्राग्ज्ञातिकोनिल ॥ ३ ॥

स्यात्लब्धाषजगाम ॥ ४६ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्यप्रकाशेनिर्वाणप्रकरणेप्रथमःसर्ग ॥ १ ॥ ॥ ५ ॥ ॥ बहरामादिभिःप्रातर्वसिष्ठस्यसभानय ॥
उक्तार्थस्मरणात्तस्वेविश्राममश्वोपवर्ण्यते ॥ १ ॥ क्षिन्नोम्लानशशुरेवदनयस्या ॥ क्षीयमाणामरणोन्मुखी ॥ १ ॥ ततोनिकरोनिगच्छत्किरणस्तापक सूर्यःप्राङ्मुखैर्जनैर्दृश्य
मानेपूर्वेपूर्वदिक्स्थेअचलेशृंगभेदैर्ध्वस्ततयाप्रतिबद्धतयातत्रवतरालनिर्गतमालोकशयाःप्रसारितहस्तास्तवाणदधौ ॥प्रत्यङ्मुखैर्जनैर्दृश्यमानेपरेपश्चिमदिक्स्थेअचलेतुअलीको
दीयवस्तुसारोपाधिमुक्ति ॥ अनेनवस्तुरूपातइवेत्युपेक्षागम्यते ॥ २ ॥ ज्योत्स्नानांकवलनायआलोकश्चक्षुःप्रसारःयस्मीरालोकोयस्येति ॥ सूर्यस्यत

अस्नातानाश्रवणानधिकारात्स्नात्वावंदितसंध्याः ॥ एवमग्रेपि ॥ ४ ॥ निर्गतस्यनिर्गमिष्यतः ॥ ५ ॥ नीरंध्रतांनिरवकाशताम् ॥ ६ ॥ ७ ॥ गृहप्रवेशात्पूर्वमेवसंबंधातिमेलय तीतिपूर्वसंबंधस्त्वरोत्साहोयस्यतथाविधोमहीपतिर्दशरथः ॥ ८ ॥ विष्टरालिषुआसनपंक्तिषु ॥ दृक्षासनयोर्विष्टरइतिषत्वम् ॥ ९ ॥ ह्यस्तनाः पूर्वेद्युर्भवाः ॥ १० ॥ राज्ञासम आभोगःसस्थानस्थितिर्यस्या. ॥ राजानयतवाक्कायचेष्टदृष्ट्वासर्वैपितथाआसन्नितिभावः ॥ ११ ॥ तद्देशयोगेषुसभाप्रदेशप्रविष्टेषुविप्रादिषुयथाप्रदेशप्रात्यहिकक्लृप्तप्रदेशानु

रामलक्ष्मणशत्रुघ्नाउत्थायानुचरैःसह॥ ययुर्वंदितसंध्यास्तेपुण्यंवासिष्ठमाश्रमम्॥ ४ ॥ तत्रवंदितसंध्यस्यनिर्गतस्यापिसद्मतः ॥ मुने र्ववंदिरेपादौपदोर्दत्वार्घ्यसंततिम्॥ ५॥ क्षणात्तत्सदनंमौनंमुनिब्राह्मणराजभिः॥ हस्त्यश्वरथयानैश्वशनैर्नीरंध्रतांययौ ॥ ६ ॥ अथा सौमुनिशार्दूलस्तत्रैवसहसेनया॥ गृहंदाशरथंकालेरामाद्यनुगतोययौ॥ ७॥ तत्रैनंपूर्वसंबंधःकृतसंध्योमहीपतिः॥ दूरमार्गविनिर्गत्य पूजयामाससादरम्॥ ८॥ पुष्पमुक्तामणिव्रातैर्भूयोत्यधिकभूपिताम॥ सभांप्रविश्यतेसर्वेविविशुर्विष्टरालिषु॥ ९॥ अथतस्मिन्नवस रेह्यस्तनाःसर्वएवते॥ श्रोतारस्समुपाजग्मुर्नभश्वरमहीचराः ॥ १० ॥ विवेशसासभासौम्याकृतान्योन्याभिवंदना ॥ बभौराजसमा भोगाशांतवातेवपद्मिनी ॥ ११ ॥ यथाप्रदेशमेवाशुनिविष्टेषुयथासुखम्॥ तेपुतद्देशयोगेपुविप्रर्पिमुनिराजसु॥ १२॥ मृदुनिस्वागतर वेशनैःशममुपागते॥ सभाकोणोपविष्टेषुशांतशब्देपुवंदिपु॥ १३ ॥ तरसैवोदितेष्वाशुश्रोतुमभ्यागतेष्विव॥ गवाक्षादिवजालेपुप्रवि ष्टेष्वर्करश्मिषु॥ १४ ॥ सत्वरप्रविशच्छ्रोतृहस्तस्पर्शघटोद्भवे॥ मुक्ताजालझणत्कारेनिद्रायामिवशाम्यति ॥ १५॥ कुमारःशंकरस्येव कचोदेवगुरोरिव॥ प्रह्लादइवशुक्रस्यसुपर्णइवशार्ङ्गिणः॥ १६ ॥ वसिष्ठस्याननेरामःशनैर्दृष्टिंन्यवेशयत्॥ भ्रमंतीमंबरोपांतेफुल्लपद्म इवालिनीम्॥ १७॥ मुनिस्त्वनुज्झितेनाथतेनैवरघुनंदनम् ॥ क्रमेणोवाचवाक्यज्ञोवाक्यंवाक्यार्थकोविदम्॥ १८ ॥ ॥श्रीवसिष्ठउ वाच॥ ॥कच्चित्स्मरसियत्प्रोक्तंह्योमयारघुनंदन॥ वाक्यमत्यंतगुर्वर्थंपरमार्थावबोधनम्॥ १९॥ इदानीमवबोधार्थमन्यच्चरिपुमर्दन॥ उच्यमानंमयेदंचशृणुशाश्वतसिद्धये॥ २०॥

क्रमेणनिविष्टेषूपविष्टेषुसत्सु ॥१२॥ मृदुनिपरस्परस्वागतप्रश्नरवे ॥१३॥ उदितेष्वर्करश्मिषुश्रोतुमिवतरसैवाभ्यागतेषुगवाक्षाद्गवाक्षंप्राप्येवतज्जालच्छिद्रेपुप्रविष्टेपुसत्सु ॥१४॥ सत्वरसभाप्रविशतांश्रोतृणाहस्तस्पर्शैरगघट्टनैश्चोद्भवोयस्यतथाविधेमुक्ताजालकभूषणादिझणत्कारेनिद्रायामिवनिस्पदभावाच्छाम्यतिसति ॥ १५ ॥ दृष्टेर्भक्तिगौरवोत्कंठाद्य तिशयद्योतनायबहून्युपमानानि ॥१६॥ अंबरेभ्रमंतीमलिनींभ्रमरीफुल्लेपद्मेउदयादिकालोनिवेशयतितद्वत् ॥ १७ ॥ तेनप्रागनुक्रांतेनैवक्रमेण ॥ १८ ॥ ह्यःपूर्वेद्युः॥१९॥२०॥

१ अभिवादनेतिक्वचित्पाठ.

प्रागुक्तक्रममेवानुक्रम्पदर्शयति ॥ वैराग्येत्यादिना ॥ २१ ॥ २२ ॥ दिक्कालाद्यनवच्छिन्नमविविधपरिच्छेदशून्यम् ॥ तस्यैवविवरण अदृष्टेति ॥ नदृष्टोदेशत कालतोवाउभेको
टीपूर्वापरावधीदितवयस्य ॥ उभशब्दस्यसमासेद्विवचनलुक्विउभयोन्यभेत्ययच् ॥ २३ ॥ समेषुसाधारणेषुगोत्वादिष्वप्यनुगतत्वात्समसमासत्तातत्परिशेषेणप्रथमानम् ॥२४॥
इतिउक्तन्यायस्यभावंमत्वानिश्चित्यअहमित्यभिमानमुक्तात्वात्मैवसुशोभनस्वमाकाशमानंदोवायस्यतथाविधोभव ॥२५॥ स्वा कलना कल्पना ॥ २६ ॥ सपदोभोग्या ॥दृशा
सत्तामवत्तय ॥ चित्तत्वमतिकल्पितचिदाभासा स्तत्पाश्चा ॥ तेषांभोगानामेषणा स्पृहा ॥ २७ ॥ पातालादिदेशभेदेवत्तुणादिवस्तुभेदेचकाराद्भूतादिकालभेदेचतदेवसर्वदृश्या

वैराग्याभ्यासवशतस्तथातत्त्वावबोधनात् ॥ संसारस्तीर्यतेतेनतेष्वेवाभ्यासमाहर ॥ २१ ॥ सम्यक्तत्त्वावबोधेनदुर्बोधेक्षयमागते ॥
गलितेवासनावेशेविशोकप्राप्यतेपदम् ॥ २२ ॥ दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ॥ एकब्रह्मैवहिजगत्स्थितंद्वित्वमुपागतम्
॥ २३ ॥ सर्वभावानवच्छिन्नयत्रब्रह्मैवविद्यते ॥ शांतसमसमाभासतत्रान्यत्वंकथंभवेत् ॥ २४ ॥ इतिमत्वाहमित्यतर्मुक्तामुक्तवपुर्महा
न् ॥ एकरूप प्रशांतात्मासाक्षात्स्वात्मसुखोभव ॥ २५ ॥ नास्तिचित्तंनचाविद्यानमनोनचजीवकः ॥ एता स्वकलनारामकृताब्रह्मणए
वता ॥ २६ ॥ यास्सपदोयाश्चदृशोयाश्चितोयास्तदेषणा ॥ ब्रह्मैवतदनाद्यन्तमब्धिवत्प्रविजृम्भते ॥ २७ ॥ पातालेभूतलेस्वर्गेतृणेप्राण्यव
रेपिच ॥ दृश्यतेतत्परब्रह्मचिद्रूपंनान्यदस्तिहि ॥ २८ ॥ उपेक्ष्यहेयोपादेयपधवोविभवावपु ॥ ब्रह्मैवविगताद्यंतमब्धिवत्प्रविजृम्भते ॥ २९ ॥
यावदज्ञानकलनायावदब्रह्मभावना ॥ यावदास्थाजगज्जालेतावच्चित्तादिकल्पना ॥ ३० ॥ देहेयावदहंभावोदृश्येस्मिन्यावदात्मना ॥
यावन्ममेदमित्यास्थातावच्चित्तादिविभ्रम ॥ ३१ ॥ यावन्नोदितमुच्चैस्त्वंसज्जनासंगसंगत ॥ यावन्मौर्ख्यंनसक्षीणंतावच्चित्तादिनिश्च
ता ॥ ३२ ॥ यावच्छिथिलतांयातंनेदंभुवनभावनम् ॥ सम्यग्दर्शनशक्त्यातत्तावच्चित्तादय स्फुटा ॥ ३३ ॥ यावदज्ञत्वमंधत्वंवैवश्यंवि
षयाशया ॥ मौर्ख्यान्मोहसमुच्छ्रायस्तावच्चित्तादिकल्पना ॥ ३४ ॥ यावदाशाविषामोदपरिस्फुरतिहृद्वने ॥ प्रविचारचकोरोंतर्नताव
त्प्रविशत्यलम् ॥ ३५ ॥ भोगेष्वनास्थमनसःशीतलामलनिर्वृते ॥ छिन्नाशापाशजालस्यक्षीयतेचित्तविभ्रम ॥ ३६ ॥

स्तनादरपतेनाप्यदित्यर्थ ॥ २८ ॥ उपेक्ष्या हेयाउपादेयाइतिसामान्यत ॥ तथाप्युत्तरोत्तरमुपादेयतमाधवोविभवावपुरित्येवंप्रकारेणेत्यर्थ ॥ २९ ॥ किंसर्वैवतथाविजृंभ
तनेत्याह ॥ यावदित्यादिना ॥ ३० ॥ आत्मनास्वेनममेदमित्यास्थाक्रियतइतिशेष ॥ ३१ ॥ उच्चैस्त्वपूर्णता ॥ चित्तादिमयुक्तानिश्चतानीचता ॥ ३२ ॥ ३३ ॥ अज्ञत्वरूपम
न्धत्वम् ॥ ३४ ॥ आशालक्षणोविषगंध ॥ तावत्प्रकृष्टात्मविचारलक्षणश्चकोरोंतर्नप्रविशति ॥ ३५ ॥ ३६ ॥

१ संसारात्तीर्यतइत्यपिपाठः     २ अभेकोयावच्छ्वोवधारणार्थ साकल्यार्थोवा ॥ सकलेदृश्येदमिमेमेवमितिवान्वय ॥

अनास्थयात्यक्ताचित्तभूःप्रबुद्धाप्रबोधफलवतीभवतिनात्यक्तेत्यर्थः ॥३७॥ चित्तानुदयएवतत्त्यागइत्याशयेनाह ॥ असंस्तुतमिति ॥ असंस्तुतमनुपयुक्तंदूरस्थमवस्तुअतएवा सतमभ्रपुरुषाकारमिवस्वदेहमनास्थंपरिपश्यतश्चित्तस्यभवनंचित्तभूःकुत. ॥३८॥ भावितश्रवणमनननिदिध्यासनसाक्षात्कारैःपरिष्कृतमनंतचिन्मात्ररूपससारप्रसिद्धरूपाद्रूपां तरमालायस्य ॥ स्वांतेमनसिअवलीनजगद्यस्य ॥३९॥ असम्यग्दर्शनेसम्यग्दर्शनविरोधिनिअज्ञानेमिथ्याभ्रमान्करोतितथाविधस्वभावेनदेसति ॥४०॥४१ ॥ चित्ताभावेकथं व्यवहारस्तत्राह ॥ जीवन्मुक्ताइत्यादिना ॥ चित्तपदवीजलेशुष्केसिकतासुजलरेखेवचित्तप्रचाररेखा॥४२॥४३॥ प्रभ्रमतिव्यवहरति ॥ सत्त्वसंस्थितिप्रयुक्तयाहेलयाअनास्थया ॥ ४४ ॥ तर्हिकितेषांवासनयाव्यवहारपरमार्थोभयदर्शनात्द्वैतैक्येनेत्याह ॥ शांताइति ॥ तदद्वयंज्योतिर्नित्यंपश्यंतितद्बाधितेद्वैतैक्येतद्वासनावानसंभवतीत्यर्थः ॥ ४५॥ तदेवस्पष्टमाह ॥ अतर्मुखतयेति ॥ ४६ ॥ अतएवाज्ञचित्तात्सत्वस्यवैलक्षण्यमित्याशयेनाह ॥ विवेकेति ॥ ४७ ॥ विमूढानाजनानामतश्चित्तशब्दाभिधानोक्तासाभवतितावदेवपुनर्जननधर्मिणी ॥ बोधतस्तुसासत्वंसतीविपर्यस्यतिजन्मनिर्वर्त्तिलक्षणविपरीतकार्यंकरोतीत्यर्थः ॥ ४८ ॥ चित्ततवेतिशेषः ॥ ४९ ॥ कीदृशंतर्हिभूयःसरोहतितदाह ॥ सरोहतीति ॥ ईषणाएषणावित्तपुत्रलोकविषयास्ताभिराविद्धरवचितम् ॥ यथापरशुनाच्छिन्नमग्निनादग्धमपितृणादिअंतर्बीजशक्त्याविद्धंभूयःप्ररोहतितद्वत् ॥ निर्दग्धंनिर्दग्धैषणाबीजशक्तिकम् ॥ ५० ॥

असंस्तुतमिवानास्थमवस्तुपरिपश्यतः ॥ तृष्णामोहपरित्यागान्नित्यशीतलसंविदः ॥ पुंसःप्रशांतचित्तस्यप्रबुद्धात्यक्तचित्तभूः ॥ ३७ ॥

दूरस्थमिवदेहंस्वमसंतंचित्तभूःकुतः ॥ ३८ ॥ भावितानंतचित्तत्त्वरूपरूपांतरात्मनः ॥ स्वांतावलीनजगतःशांतोजीवादिविभ्रमः ॥ ३९ ॥

असम्यग्दर्शनेशांतेमिथ्याभ्रमकरात्मनि ॥ उदितेपरमादित्येपरमार्थैकदर्शने ॥ ४० ॥ अपुनर्दर्शनायैवदग्धसंशुष्कपर्णवत् ॥ चित्तंविगलितंविद्धिवह्नौघृतलवंयथा ॥ ४१ ॥

जीवन्मुक्तामहात्मानोयेपरावरदर्शिनः ॥ तेषांयाचित्तपदवीसासत्त्वमितिकथ्यते ॥ ४२ ॥ जीवन्मुक्तशरीरेषुवासनाव्यवहारिणी ॥ नचित्तनाम्नीभवतिसाहिसत्त्वपदंगता ॥ ४३ ॥

निश्चेतसोहितत्त्वज्ञानित्यंसमपदेस्थिताः ॥ लीलयाप्रभ्रमंतीहसत्वसंस्थितिहेलया ॥ ४४ ॥ शांताव्यवहरंतोपिसत्त्वस्थाःसंयतेंद्रियाः ॥ नित्यंपश्यंतितज्ज्योतिर्नद्वैतैक्येनवासना ॥ ४५ ॥

अंतर्मुखतयासर्वंचिद्वह्नौत्रिजगत्तृणम् ॥ जुह्वतोंतर्निवर्त्तंतेमुनेश्चित्तादिविभ्रमाः ॥ ४६ ॥ विवेकविशदंचेतःसत्वमित्यभिधीयते ॥ भूयःफलतिनोमोहंदग्धबीजमिवांकुरम् ॥ ४७ ॥

यावत्सत्वंविमूढांतःपुनर्जननधर्मिणी ॥ चित्तशब्दाभिधानोक्ताविपर्यस्यतिबोधतः ॥ ४८ ॥ प्राप्तप्राप्योभवान्नामसत्वभावमुपागतम् ॥ चित्तंज्ञानाग्निनादग्धंनभूयःपरिरोहति ॥ ४९ ॥

संरोहतीषणाविद्धंयथापरशुनाग्निना ॥ नतुज्ञानाग्निनिर्दग्धंप्रबोधविशदंमनः ॥ ५० ॥

ज्ञानाभिनाकुतोजगद्बीजशक्तिरित्याह ॥ ब्रह्मेति ॥ हियस्माज्जगद्ब्रह्मण्एवमोहाद्द्रष्टाआरोपितरूपेणवृद्धिं यस्माच्चज्ञानाज्जगदपिवास्तवब्रह्मस्वभावाभिवृद्धिक यतश्च
अनयोर्ब्रह्मजगतोरज्ञानमात्रकृतोभेदस्तन्नाशेनविघतेअतोनभेदोहृतीत्यर्थः ॥ ५१ ॥ त्रिजगच्चिदतश्चिद्रूपेणैवास्तियथातीक्ष्णतैकरसेमरिचेतीक्ष्णतातद्वत् ॥ अतस्तस्मद्दृशाचिज्ञ
मतीनभिन्ने ॥ तस्मात्सदसतीवस्तुभेदेभलयीमुधामायामयुक्तमोतिरेवेत्यर्थ ॥५२॥ तर्हिअसत्वाद्वमपश्यासीत्तत्तोवैसवजायतेत्यादिश्रौता घटोस्तिघटोनास्तीत्यादिलौकिका
श्वसदसच्छब्दा किंनिरर्थकानेत्याह ॥ शब्देति ॥ इहश्रौतलौकिकव्यवहारेपरस्परव्यावृत्ता शब्दार्थयोःसंकेतिताइतिवक्तृश्रोतृषासनैषव्यावृत्त्याकारेणभासते तेवस
शब्दस्नार्थसिदाश्रयान अवस्तुभूतायाव्यावृत्त शब्दार्थताभावात् ॥ एवव्यावृत्त्यपगमेउभेसदसच्छब्दवाच्येअव्यावृत्तानन्मुगतचिद्धोमत्वावेशपरमार्थतोभातइतितेवपरमार्थ
वस्तुशब्दवाच्यइत्यर्थ ॥ ५३॥ एवसर्वसविकल्पत्यागेनचिन्मात्रपरनिष्ठायामस्ताममप्रयुक्तजननमरणाद्यनर्थमाभिमयुक्तरोदनस्यापिनप्रसक्तिरित्याह ॥ अचिन्मयत्वादिति ॥

ब्रह्मसूत्रैवहिजगज्जगच्चब्रह्मबृंहणम् ॥ विघतेनानयोर्भेदश्चिद्घनब्रह्मणोरिव ॥ ५१ ॥ चिदतस्त्रिजगन्मरिचेतीक्ष्णतायथा ॥ नातश्चि
ज्जगताभिन्नेतस्मात्सदसतीमुधा ॥ ५२ ॥ शब्दशब्दार्थसंकेतवासनेहनसंविदा ॥ चिद्व्योमत्वादुभेभातस्यजात सदसन्मती ॥ ५३ ॥
अचिन्मयत्वान्नासित्वस्वात्माकिमिवरोदिषि ॥ अचिन्मयत्वेजगतामभावेकल्पनंकुरु ॥५४॥ चिन्मयचेत्सदासर्वतच्चित्त्वप्रविचारय ॥
शुद्धसत्वमनाद्यंतंत्यागकल्पनाकुरु ॥५५॥ चिदात्मासिनिरंशोसिपारावारविवर्जित ॥ रूपंस्मरनिजंस्फारमाऽस्मृत्यासमितोभव
॥ ५६ ॥ तासत्तांगतःसर्वमसर्वंभावयोदयी ॥ तादृग्रूपोसिशांतोसिचिदसिव्रह्मरूप्यसि ॥ ५७॥ चिच्छिलोदरमेवासिनासिनानास्य
थाप्यसि ॥ योसिसोसिनसोमीवसदस्यसदसिस्वभा ॥५८॥ य पदार्थविशेषोंतर्नत्वनत्वेवसोस्तिते ॥ तदस्यतदसिस्वस्याश्चिद्घनात्मन्त्व
मोस्तुते ॥ ५९॥

त्वमितिव्यवह्रियमाणशमाभिधसदसत्स्वभावशरीरमात्रस्वयनासि
त्वात् ॥ सर्वस्यजगतःअचिन्मयत्वेअभावेवावगतेदेहाविकल्पनैषतवकुरुइत्यर्थ ॥ ५४ ॥ यदितुचिद्घनत्वलक्षणजात्मभावपरित्यागाच्चिन्मयमेवजगदितिमन्यसेतदाचित्त्वचि
त्तभावप्रविचारय ॥ तच्चमन्यगूविचार्यमाणशुद्धचिद्विविधपरिच्छेदशून्यमेकरसम् ॥ तत्परेत्यागनर्थकल्पनाकुरुइत्यर्थ ॥ ५५ ॥ अस्मृत्याचित्स्वरूपविस्मरणेनसमित परिच्छि
न्न ॥ ५६ ॥ तांसत्तांपूर्णचित्स्वभावस्थितिंगत सन्उदयीनिरतिशयानंदलाभापुद्भयवान्भूत्वाअसर्वपरिच्छिन्नजगत्सर्वपूर्णस्वभावभावयसपादय ॥ ५७ ॥ नानासिनानाभावे
नआसोतच्छीलःभासिअयापितद्वाधावधित्वात्वसिपरिशिष्यसे ॥ तत्सर्वभावाभ्यानसत्वक्तिनिमित्तापगमात्योसिसोसि ॥ तर्हिकिमत्यन्तपरोक्षोनेत्याह ॥ नेति ॥ नसःपरोक्षोसीव
यत स्वभा स्वप्रकाशः ॥ ५८ ॥ सदस्यसदसीत्यशाचिवृणोति ॥ यइति ॥ य सर्वपदार्थानांविशेषोव्यावृत्तिलक्षणोंऽतःपरिच्छेदःसएवअलीकत्वादसच्छब्दवाच्य ॥ सत्वनभवसी
तिसदसीत्यस्यार्थ ॥ सएवतदभावत्तसद्धर्मत्वेनकल्प्यमानोव्यावहारिकैःसत्तेतिव्यपदिश्यतेसतेनास्येवेत्यसदसीत्यस्यार्थ ॥ इत्याशयेनसदस्यसदसीत्युक्तइत्यर्थ ॥ ५९ ॥

१ सदसच्छब्दकानाइत्यपिपाठ

आद्यंतवर्जितंविशालंस्फटिकशिलांतरालमिवसंपीडंनिबिडंयच्चिद्घनंतद्वपुस्तत्स्वभावस्त्वंनदुःखादिविक्रियाभागितिमत्वास्वस्थोभव ॥ आसमंताद्विस्तीर्णेत्वदीयचिच्छिलाजठरेप्रतिबिंबितपल्लवकोशइवकल्पितायामायायारेखासदृशवासनाभेदेषुमनोलीलयास्थितान्यखिलानिजगंतियस्मिंस्तथाविधहेरामतेतादृशायनमइत्यर्थः ॥ ६० ॥ ॥ इतिश्रीवासिष्ठमहारामा०तात्पर्यप्रकाशेनिर्वाणप्रकरणेद्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ ॥ ब्रह्मजीवमनोदेहजगतामैक्यदर्शनात् ॥ सर्वद्वैतभ्रमेशातेपूर्णैकस्थितिरुच्यते ॥ १ ॥ तत्रादौसर्वकल्पनाप्रतिभासनिमित्तचित्स्वरूपमात्मेतिपरिचाययति ॥ भावीति ॥ अबुधौभाविनांजायमानानांभूरितरंगभेदकल्पनानामास्पदंपयोवृंदजलसामान्यमिवयाचित् अनंतानिजगतिवहतिसाउइतिसंभावनायांसैवात्मेतिसंभावयेत्यर्थः ॥ १ ॥ तत्संभावनोत्तरंद्वैतभावनात्यागमात्रेणनिष्प्रपंचंनिर्वासनंचतत्स्वरूपमनुभावयति ॥ भवेति॥ २ ॥ त

आद्यंतवर्जितविशालशिलांतरालसंपीडचिद्घनवपुर्गगनामलस्त्वम् ॥ स्वस्थोभवाजठरपल्लवकोशलेखालीलास्थिताखिलजगज्जय तेनमस्ते ॥ ६० ॥ ॥इ०वा०वा०दे०मो० निर्वाणप्रकरणेविश्रांतिसुदृढीकरणंनामद्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ ॥श्रीवसिष्ठउवाच॥ ॥भाविभूरितरंगाणांपयोवृंदमिवांबुधौ॥ याचिद्वहत्यनंतानिजगंत्यनघसोभवान्॥ १ ॥ भवभावनयामुक्तोभावाभावविवर्जितः॥ चिदात्मन्संस्थिताःक्वेववदतेवासनादयः ॥ २ ॥ जीवोयंवासनादीदमितिचित्कचतिस्वतः ॥ इतरोक्त्यर्थयोरत्रकःप्रसंगोंगकथ्यताम्॥ ३ ॥ महातरंगगंभीरभासुरात्मचिदर्णवः ॥ रामाभिधोर्मिस्तिमितःसमसौम्योसिव्योमवत् ॥ ४ ॥ यथानभिन्नमनलादौष्ण्यंसौगंध्यमंबुजात्॥ कार्ष्ण्यंकज्जलतःशौक्ल्यंहिमान्माधुर्यमिक्षुतः ॥ ५ ॥ आलोकश्चप्रकाशांगादनुभूतिस्तथाचितेः॥ जलाद्वीचिर्यथाऽभिन्नाचित्स्वभावात्तथाजगत्॥ ६॥ चितोनभिन्नोनुभवोभिन्नोनानुभवादहम्॥ नमत्तोभिद्यतेजीवोनजीवाद्भिद्यतेमनः॥७॥ मनसोनेंद्रियंभिन्नंपृथग्देहश्चनेंद्रियात्॥ नशरीराज्जगद्भिन्नंजगतोनान्यदस्तिहि॥८॥ एवंप्रवर्त्तितमिदंमहच्चक्रमिदंचिरम् ॥ नचप्रवर्त्तितंकिंचिन्नचशीघ्रंचनोचिरम्॥ ९ ॥ स्ववेदनमनंतंचसर्वमेवमखंडितम् ॥ विद्यतेव्योमनिव्योमनकस्मिंश्चिन्नकिंचन॥ १० ॥

तत्स्वरूपेपरिचितेजीववासनाजगद्विभागाश्रितएवकचनभेदकल्पनानपृथक्सतीत्यनुभवितुशक्यतइत्याह ॥ जीवइति ॥ इतरोक्तेरचिदर्थकशब्दस्यतदर्थस्यच ॥ अत्रएवंरूपेचिद्वस्तुनि ॥ ३ ॥ रमंतेयोगिनोयस्मिन्नित्यानंदेचिदात्मनि इतिरामपदेनासौपरंब्रह्माभिधीयतइतिव्युत्पादितान्वर्थरामाभिधानः ॥ ४ ॥ तत्रदृश्यस्यदृग्व्यतिरेकंदृग्धर्मत्वोपपादकदृष्टांतैःसाधयति ॥ यथेत्यादिना ॥ ५ ॥ प्रकाशांगात्तेजसः ॥ अनुभूतिर्वृत्तिप्रतिबिंबचैतन्यम् ॥ तथाशब्दःपूर्वदृष्टांतसमुच्चये ॥ यथाअभिन्नेतिच्छेदः ॥ ६ ॥ उक्तमेवार्थमध्यासक्रमोद्घाटनेनस्फुटंदर्शयति ॥ चितइत्यादिना ॥ चितोमूलाधिष्ठानब्रह्मचितः ॥ अनुभवोमायावृत्त्यारूढचिदाभासः ॥ अहंव्यष्टिसमष्ट्यहंकारः ॥ एवमग्रेपिशरीरांतेबोध्यम ॥ ७ ॥ नशरीरादिति॥समष्टिशरीरेजगतोंतर्भावादित्याशयः ॥ ८ ॥ इदमस्तुतमिदंदृश्यमानंजगच्चक्रंचितैवस्वरूपमोहाद्दध्यासपरंपरयाप्रवर्त्तितमित्यर्थः ॥ परमार्थदृशातुर्नकिंचिदपिप्रवर्त्तितम्॥ ९ ॥ १० ॥

तस्यनिरतिशयपूर्णतामेवभगिभौरेवर्णयति ॥ शून्यमिति ॥ ११ ॥ इस्यकर्तृतानेव ॥ १२ ॥ यत्उपादेयमुद्याविषयजातमावीयतेतदेवतेदु स्वायसुखायचभवति ॥ भावउपा
देयतानुद्धिस्तदभावेनतुनकिंचिद्वावेयनामजषति अनास्वंयसुखदु स्वयोरकर्तृत्वसिद्धमितिनतु स्वाविप्रसक्तिरित्यर्थ ॥ अथवाभावानादस्थानामभावेनअसत्वेननादेयंकिंचिद
स्तीतितत्सुखदु स्वयोरकर्मित्यर्थ ॥१३॥ नानात्वेनप्रतीयमानानांभावानांकथमभावस्तमाह ॥ यथेति ॥ १४ ॥ काष्ठलोष्टसमस्थितिर्भवेतिशेष ॥१५॥ शत्रुशरीरेपिस्वस्यै
वात्मत्वात्स्वशरीरइवतत्राप्यरूभिमप्रीतिरात्मदर्शिनोभवतीत्याह ॥ यएवेति ॥ मित्रमियतमम ॥१६ ॥ ततएवहर्षामर्षयोपनिवृत्तिरित्याह ॥ समूलेति ॥ योनवीस्वतटेविषयमान
द्रुममिवसौख्यमत्सरयसमूलकापकपतिसमूलमुन्मूलयतिसएवहर्षामर्षयापाप्पाहताभवतीत्यर्थ ॥ समूलोपपवाल्कपेर्णमुलिकपाविपुयमाषिप्यनुप्रयोग ॥ १७॥ रागद्वेषयो

शून्यशून्येसमुच्छूनब्रह्मब्रह्मणिबृंहितम्॥ सत्यविजृंभतेसत्येपूर्णंपूर्णमिवस्थितम्॥११॥रूपालोकमनस्कारान्कुर्वन्नपिनकिंचन॥ज्ञ
करोत्यनुपादेयान्नज्ञस्यैवहिकर्तृता॥१२॥ यदुपादेयमुद्याचतदु स्वायसुखायते॥ भावाभावेननादेयमकर्तृसुखदु स्वयो ॥१३॥यथा
नानाप्यनानैवखंखानीतिवाग्भ्रमः॥ सार्थकोप्यतिशून्यात्मातथात्मजगतोक्रम ॥१४॥अतज्ञोमामलोबाल्येसम्यगाचारचतुर ॥
इष्टानिष्टविकारेषुकाष्ठलोष्टसमस्थिति ॥ १५॥ यएवातितरांशत्रु सत्वरमारणोद्यत ॥ तमेवाऽरुचिर्मंमित्रंय पश्यतिसपश्यति॥१६॥स
मूलकापकपतिनदीतटइवद्रुमम्॥ य सौख्यंमत्सरचसहर्षामर्षदोषहा॥१७॥रागद्वेषविचाराणांस्वरूपंचेन्नभाव्यते॥ तत सतोप्यसद्रू
पा सेविताअप्यसेविता ॥ १८॥ यस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यते॥ हत्वापिसइमाँलोकान्नहंतिननिबध्यते॥ १९ ॥ यन्नास्तित
स्यसद्भावप्रतिपत्तिरुदाहृता॥ मायेतिसापरिज्ञानादेवनश्यत्यसंशयम्॥ २० ॥ नि स्नेहदीपवच्छांतोयस्यांतर्वासनाज्वर ॥ तेनचिन्ररू
तेनैवजितज्ञेनाविकारिणा॥ २१॥

स्तत्कार्यविकाराणांचस्वरूपतत्त्वचेन्नभाव्यतेनविचार्यतेततस्तर्हिसत अरागद्वेषत्वेनप्रसिद्धाअपिजनाअसद्रूपा ॥ रागद्वेषतत्त्वापरिज्ञानेतन्मूलोच्छेदासंभवेनपुनस्तेषांरागद्वे
षप्ररोहापरिहारात् ॥ अतस्तेसेविताअपिदूष्येस्यर्थ ॥ १८ ॥ किंतर्हितस्तयोरितिचेदहंकारएव अतस्तत्परित्यागेआत्यंतिकरागद्वेषनिवृत्तिरित्याशयेनगीतावाक्यमुदाहर
ति ॥ यस्येति ॥ १९ ॥ अहंकारस्यतुतत्त्वमज्ञानमेवतन्निवृत्तिस्तुस्वात्मपरिज्ञानादित्याशयेनतत्प्रमायाश्चाप्रसिद्धिदर्शयन्नाह ॥ यदिति ॥ २० ॥ यस्यवासनाज्वर शांत
स्तेनजितम ॥ सकिंजय सत्योनेत्याह ॥ चित्ररूपेणेति ॥ यथाचित्ररूपेणराज्ञाचित्रलिखितशत्रुशिरश्छेदतजितमपितथानित्यमिरस्तसंसारनिरासबोधान्नित्यसिद्धाहिनी
मपूर्णात्मनाजितमित्यर्थ ॥ २१ ॥

यस्यपुरुषधौरेयस्यइदसमस्तभोग्यपदार्थजातंसदसद्दशासुआविर्भावतिरोभावावस्थासुवैभवदारिन्द्यदशासुआरोपापवाददशासुवामिथ्यात्वात्तत्त्वतआत्मतयानित्यलब्धत्वा द्वाअनुपादेयसत्तद्वियोगसयोगप्रयुक्तायदु खदाहायसुखायचनभवतिकिंतुइहसजीवोजीवन्नपिमुक्तएवेत्यर्थ ॥२२॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेनिर्वाण०तृतीय सर्ग ॥ ३ ॥ ॥ ४ ॥ ॥ निरस्यान्या पराग्दृष्टीर्वसिष्ठेनेहराघव ॥ प्रत्यग्दृष्टौस्थिरीकृत्यपृष्ट.सशयशांतये ॥ १ ॥ रामस्यप्रत्यग्दृष्टिमुद्घाटयिष्यन्वसिष्ठ.प्रथ ममाध्यात्मिकेषुमनआदिभेदेष्वनुगताखडचिदैक्यदर्शयन्जीवादिभेदबाधमनुभावयति ॥ मनइति ॥ १ ॥ तत्रोपपत्तिमाह ॥ एकेनेति ॥ दत्तास्वसत्तासंसर्गाध्यासेनप्रापिता ॥ ॥ २ ॥ मनआद्यनुगतप्रत्यक्तत्त्वदर्शनादेवतत्रविश्रांतस्यबाह्यार्थभोगतृष्णाक्षयेबाह्यसर्ववस्त्वनुगतसन्मात्रस्यापिप्रत्यगभेदेनस्वतएवभानाद्बाह्याध्यासनिमित्तमप्यज्ञानक्षीयतइ

यस्यानुपादेयमिदंसमस्तंपदार्थजातंसदसद्दशासु ॥ नदुःखदाहायसुखायनैवविमुक्तएवेहसजीवएव ॥ २२ ॥ ॥इ०वा०वा०दे० मोक्षोपायेषुनिर्वाणप्रकरणेब्रह्मैक्यप्रतिपादनंनामतृतीयःसर्गः ॥ ३ ॥ ॥ ४ ॥ ॥ ४ ॥ ॥श्रीवसिष्ठउवाच॥ ॥ मनोबुद्धिरहंकारइंद्रियादितथानघ ॥ अचेत्यचिन्मयंसर्वंकृतेजीवादयःस्थिताः ॥ १ ॥ एकेनैवात्मनादत्तानानातेयंमहात्मना ॥ यथैकेनैवचंद्रेणतिमिराप्पात्रदर्पणैः ॥२॥ भोगतृष्णाविषावेशोयदैवोपशमंगतः ॥ तदैवमस्तमज्ञानमांध्यंध्वांतक्षयादिव ॥ ३ ॥ अध्यात्मशास्त्रमंत्रेणतृष्णाविषविषूचिका॥क्षीयतेभावितेनांतःशरदामिहिकायथा॥४॥मौर्ख्येक्षीणेक्षतंविद्धिचित्तंरामसबांधवम् ॥ विलीनांबुधरेव्योम्निजाड्यंशाम्यत्यविभ्रतः ॥ ५ ॥ अचित्तत्वंगतेचित्तेक्षीयतेवासनाभ्रमः ॥ हारमुक्तासमावेशश्छिन्नेतंताविवानघ ॥ ६ ॥ रघुनाथविघाताय शास्त्रार्थंभावयंतिये ॥ कृमिकीटत्वयोग्यायचेतसासंमिलंतिते ॥ ७॥ नवतामरसाकारकांतलोचनलोलता ॥ शांतेमौर्ख्येक्षतावातेचलतासरसोयथा ॥ ८ ॥ स्थिरतामुपयातोसिभावाभावविवर्जितः ॥ पदेपरमविस्तारेनभसीवप्रभंजनः ॥ ९ ॥ मन्येमद्वचनैर्बोधमागतोसिरघूद्वह ॥ विगताज्ञाननिद्रोंतर्नृपतिःपटहैरिव ॥ १० ॥

त्याशयेनाह॥भोगेति ॥ एवमुक्तरीत्याप्रत्यक्तत्त्वदर्शनेनभोगतृष्णाविषावेशोयदैवोपशमगतस्तदैवाज्ञानमस्तंनिरस्तमित्यर्थ ॥ आध्यंचक्षुषोविषयप्रथनासामर्थ्यम् ॥ ३ ॥ अंतर्भावितेनसम्यग्विचारितेन ॥ ४ ॥ मौर्ख्यमज्ञानम् ॥ जाड्यंशैत्यम् ॥ ५ ॥ ६ ॥ एवसर्ववेदांतशास्त्ररहस्यभूताप्रत्यग्दृष्टिसम्यगुद्घाट्यतद्विपरीतदर्शनशास्त्रार्थविघातकंनिंदति ॥ रघुनाथेति ॥ ॥ दर्शितशास्त्रार्थशास्त्ररहस्य उपेक्ष्येतिशेष ॥ येतद्विघातायान्यथाभावयंतितेकृमिकीटत्वयोग्यायपापायचेतसारागादिहेतुदुर्बुद्ध्यामिलंति ॥ ७ ॥ तादुर्बुद्धिव्यवहितसर्गेप्रपचयिष्यमाणाप्रतीकेनोदाहरन्मौर्ख्यक्षयात्तत्क्षयदर्शयति ॥ नवेति ॥ स्त्र्यादिपिंडेषुदुर्बुद्धिकल्पितेतिशेष. ॥८॥इदानींरामस्यदर्शितप्रत्यग्दृष्टौस्थिरीभावलिंगैरुपलक्ष्याह ॥ स्थिरतामिति ॥ प्रभजनोवायु ॥ ९ ॥ पटहैर्वैतालिकानाप्रबोधनवाद्यभेदै. ॥ १० ॥

१ नेत्ररोगविशेषः

इदानींसकलस्योपदेशस्यसाफल्यदर्शनाद्रामंस्तवप्रशंसन्नाह ॥ सामान्येइति ॥ छर्मतिबोधजननफलेनयुज्यते ॥ ११ ॥ यस्ममयित्वयाउपादेयवाक्यत्वमाननत्वभावितंचि
त्तितमतोमहृषयस्तवांतर्दुविशिशाति ॥ १२ ॥ इदानींफलपर्यवसितस्योपदिष्टार्थस्यापिस्मरणेनधारणंस्वस्यकुलपूज्यत्वान्माननीयशासनत्वस्थापनेनविधत्ते ॥ वयमिति ॥ भव
तांसर्वेषामिक्ष्वाकूणांविशेषतस्त्वरघूद्वहाणांवयंकुलगुरवइतिहेतोस्त्वयामदुदितमिदशुभवचनधार्यपुनःपुनश्चिंतनेनदृढीकृत्येत्यर्थः ॥ १२ ॥ ॥ इतिश्रीवासिष्ठम० तात्पर्य
प्रकाशेनिर्वाण० चतुर्थःसर्गः ॥ ४ ॥ ॥ ५ ॥ ॥ इत्थमुक्त्वाश्रीरामोविश्रांतःपरमेष्ठुते ॥ गुरोःपुरःस्वानुभवंवर्णयामासविस्तरात् ॥ १ ॥ चित्स्वविवेकरसपूर्णास्मिजा

सामान्येपलगंत्येवजनेकुलगुरोर्गिर ॥ अत्युदारमतौरामनलगतिकर्यत्वयि ॥ ११ ॥ यत्रोपादेयवाक्यत्वमाविर्तस्वेनचेतसा ॥ महन्त्वों
तर्विंशत्युषेस्तत्तेक्षेत्रेयथापय ॥ १२ ॥ वयमिक्ष्वाकुमहानुभावनित्यंकुलगुरवोभवतांरघूद्वहानाम् ॥ मदुदितमिदमाशुधार्यमार्यशुभ
वचनंहृदिहारवत्त्वयेति ॥ १३ ॥ ॥ इ० वा० वा० दे० मोक्षोपायेपुनिर्वाणप्रकरणेचित्ताभावप्रतिपादनंनामचतुर्थः सर्ग ॥ ४ ॥ ॥ ५ ॥
॥ श्रीरामउवाच ॥ ॥ अहोअहंगतश्चित्त्वंभवद्वाक्यार्थभावनात् ॥ शांतंजगज्जालमिदमग्रस्यमपिनायमे ॥ १ ॥ परामत प्रयातोस्मि
परमात्मनिनिर्वृतिम् ॥ दीर्घावग्रहसंतप्तश्चेववसुधातलम् ॥ २ ॥ शाम्यामिशीतलाकारःसुखंतिष्ठामिकेवलम् ॥ प्रसादमनुयातोहस
रोनिर्वारणंयथा ॥ ३ ॥ सम्यक्प्रसन्नमखिलंदिङ्मंडलमिदंमुने ॥ यथाभूतंप्रपश्यामिनिर्नीहारमिवाधुना ॥ ४ ॥ जातोस्मिगतसंदे
हःशांताशाखगवद्भिक ॥ रागनीरागनिर्मुक्तोम्बरजंगलशीतल ॥ ५ ॥ आत्मनैवांतरानंदत्वात्तोस्म्यंतवर्जितम् ॥ रसायनरसास्वादो
यत्रनायवणायते ॥ ६ ॥ अथाद्यप्रकृतिस्थोस्मिस्वस्थोस्मिमुदितोस्मिच ॥ लोकारामोस्मिरामोस्मिनमोमत्यंनमोस्तुते ॥ ७ ॥ तेसंश
याला कलना सर्वमस्तंगतंमम ॥ रात्रिवेतालसंसारःप्रभातइवभास्करे ॥ ८ ॥ निर्मलेहृदिविस्तीर्णेसपन्नेहिमशीतले ॥ मनोनिर्वृति
मायातंसरसीशरदीवमे ॥ ९ ॥

चम् ॥ १ ॥ दीर्घेणचिरकालानुवृत्तेनावग्रहेणवृष्टिप्रतिबंधेनसंतप्तम् ॥ २ ॥ निर्वारणंनिर्मलजलनिर्विघ्नोजनिमित्तमित्तियावत् ॥ ३ ॥ यथाभूतंयथार्थभूतसम्यक्स्वभावम् ॥ ४ ॥
रागैर्विषयरंजनैर्नीरागैस्तद्विरोधिवैराग्यादिरपिनिर्मुक्तः ॥ म्बरमिवम्बरीहाररजस्कंशरत्कालमंडलमिवशीतल ॥ ५ ॥ रसायनमन्त्यंतद्रसास्वादोपियत्रयस्मिन्नानंदेतु
नायतेतृणवन्नीरसीजवतिउपेक्ष्योजवतिवा ॥ ६ ॥ प्रकृतिःपारमार्थिकस्वभावस्तस्य ॥ लोकाआरमंतेविश्राम्यंतियस्मिन्सतरइवस्मिएतस्यैवामरस्यान्यानिभूतानिनाभा
नुपजीवतीतिमुने ॥ अतएवरमतेयोगिनोयत्रेतिमाम्बर्तितम्युत्पत्त्यारामोस्मि ॥ स्वनामसार्थक्यंमनावर्तपद्मनित्यर्थः ॥ तारसायमसंतत्परतकायतेतुम्यचमनः ॥ ७ ॥ कल
नायया ॥ रात्रौवालभामिकस्मितोवेतालस्यतवारःप्रचारःकुतुर्यथा ॥ ८ ॥ मनःशरदिसरसीमहाहरदइवनिर्लीननिर्विघ्नेनविश्रांतिमायातंमाननान ॥ ९ ॥

चिदेकरसस्यात्मन अज्ञानादिकलंकं कस्मान्निमित्तादागत कथंस्वप्रकाशेतिष्ठतिसःअसंगमपरिच्छिन्नंचतंकथमाच्छादयति कथंचकूटस्थस्यसांसारिकविकारानुभवइत्या दिसंशयःसर्वसंशयमूलभूताज्ञानापगमान्निर्मूलतांयातः ॥ १० ॥ भाविताकृति स्फुरदाकारः ॥११॥ अहंसांप्रतविकासवान्सन्ननुभूयमानमशनायाद्यतीतमात्मानमंतराविनैव प्राकृतृष्णानिगडयंत्रितःकःअभवमितिविहसामि ॥ १२ ॥ आइतिस्मरणद्योतकोनिपातः ॥ निपातएकाजनाङितिप्रगृह्यत्वादसंधिः ॥ त्वद्वागमृतापूरस्नातेनमयाअयमहयोय थापरमार्थत.स्थितएषसकलश्चास्मितथाइदानींस्मृतमित्यन्वयः ॥ १३ ॥ अहमिहस्थएवसन्कांचिद्वितताामपरिच्छिन्नांब्रह्मलोकभूमिमधिरूढोस्मि यत्रयस्यांभूमावर्कःसूर्यः पातालमास्थितइवात्यतमधोदेशस्थितोपिनभवति कार्यब्रह्मलोकाद्धिसोऽधःस्थितोनपरब्रह्मलोकात् ॥ नतत्रसूर्योभातिनचंद्रतारकमित्यादिश्रुतेरितिभावः ॥ १४ ॥ भावा भावभवार्णवात् ल्यब्लोपेपंचमी ॥ भावाभावलक्षणभवार्णवनिस्तीर्यतत्पारभूततदधिष्ठानसन्मात्रतामुपेतायेत्यर्थः॥यतोहमात्मनाआत्मनिस्वेमहिम्निजयामिसर्वोत्कर्षेणवर्ते

कलंकआत्मनःकस्मात्कथंचेत्यादिसंशयः ॥ नूनंनिर्मूलतांयातोमृगांकाग्रेयथातमः ॥ १० ॥ सर्वमात्मैवसर्वत्रसर्वदाभाविताकृतिः ॥
इदमन्यदिदंचान्यदित्यसत्कलनाकुतः ॥ ११ ॥ कोभवंप्रागहंताद्दकृतृष्णानिगडयंत्रितः ॥ अंतरात्मानमेवेतिविहसामिविकासवान्
॥१२॥ आइदानींस्मृतंसम्यग्यथैषसकलोस्म्यसौ॥यस्त्वद्वागमृतापूरस्नातेनायमहंस्थितः॥१३॥ अहोनुविततांभूमिमधिरूढोस्मिपावनी
म्॥इहस्थएवयत्रार्कोनपातालमिवस्थितः॥१४॥ मत्यंसत्तामुपेतायभावाभावभवार्णवात्॥ नमोनित्यंनमस्यायजयाम्यात्मात्मनात्म
नि॥१५॥ अनुभववशतोत्वदब्जकोशेस्फुटमलितांसमुपागतेननाथ॥ तववरवचसेहवीतशोकांचिरमुदितांचदशामुपागतोस्मि॥१६॥
॥इ० वा० वा० दे० मोक्षोपायेषुनिर्वाणप्रकरणेराघवविश्रांतिवर्णनंनामपंचमःसर्गः॥५॥ ॥ ७ ॥ ॥ श्रीवसिष्ठउवाच॥
भूयएवमहाबाहोश्रृणुमेपरमंवचः ॥ यत्तेहंप्रीयमाणायवक्ष्यामिहितकाम्यया ॥ १ ॥ भेदमभ्युपगम्यापिश्रृणुबुद्धिविवृद्धये॥ भवेदल्प
प्रबुद्धानामपिनोदुःखितायथा ॥ २ ॥

अत.सर्वैर्नित्यसर्वदानमस्यायनमस्कर्तुमर्हायेत्यर्थः ॥ १५ ॥ हेनाथअहंत्वदब्जकोशेस्फुटमलितांभ्रमरवत्स्थिरतामुपागतेनतववरवचसाइहअस्मिन्देशेकालेचस्वानुभववश तोवीतशोकाचिरसदैवोदितामुदितावाजीवन्मुक्तदशामुपागतोस्मीत्यर्थः ॥ १६ ॥ ॥ इतिश्रीवासिष्ठमहा० तात्पर्यप्रकाशेनिर्वाण० पंचमःसर्गः ॥ ५ ॥ ॥ ७ ॥ ॥ देहा त्मविवेकोत्रदुःखदेहात्मदर्शनात् ॥ मूढानामगनासगान्मोहवृद्धिश्चवर्ण्यते ॥ १ ॥ इत्थंश्रीरामेसम्यक्प्रबुद्धेप्यन्येषांश्रोतॄणांतथैवप्रबोधजननायप्रवर्त्तमानोभगवान्वसिष्ठो वक्ष्यमाणदेहात्मविवेकादिश्रवणेराममप्यनुकूलयन्नाह ॥ भूयएवेत्यादिना ॥ प्रीयमाणायउपदेशतात्पर्यगोचरनिरतिशयानंदात्मानुभवलक्षणप्रीतिभाजनायतेसर्वजनहित काम्ययायद्वक्ष्यामितच्छृणुष्वेत्यर्थ. ॥१॥ ननुश्रोतृश्रावयितृश्रोतव्यादिभेदानांबाधितत्वात्कथमेश्रवणेप्रवृत्तिःकिंवाततःफलंतत्राह ॥ भेदमिति ॥ बाधितानुवृत्त्याभेदाभ्युपगमे नश्रवणेप्रवृत्तिसिद्धिस्तत्वबोधाभिवृद्धिरल्पप्रबुद्धोद्धारश्चतत्फलमित्यर्थः ॥ २ ॥

तथारीश्रोतॄणामिन्द्रियजयासामर्थ्यात्तैराकृष्यमाणस्यमनस पूर्णात्मनिप्रतिष्ठाकथंस्यादितिजिज्ञासोर्लिंगैरुपलक्ष्य यस्त्वविज्ञानवान्भवत्ययुक्तेनमनसासदा ॥ तस्येंद्रियाण्यव श्यानिदुष्टाश्वाइवसारथे ॥ यस्तुविज्ञानवान्भवतियुक्तेनमनसासदा ॥ तस्येंद्रियाणिवश्यानिसदश्वाइवसारथेरितिश्रुतिसिद्धयोक्तदिशैवताक्रमेणपरिहरति ॥ यस्येतिद्वाभ्याम् ॥ इ स्येतस्मादेवासदात्मभावेनापराधादतिरस्याअक्षाण्यरिपवशामवोभूत्वातमवमभिभवतिपराभावयन्ति ॥ १ ॥ सतुष्टयास्तत्त्वात्मदर्शनोपकारजनिततोषेणमअक्षाणिसुहृदोभिभा णिभूत्वानप्रतिकिंतुज्ञानाभिरमनुकूलाचरणेनपालयतीत्यर्थ ॥ ४ ॥ स्फुरतोभ्यवहरतोयस्यपुंसोभोग्यपदार्थेसर्वैर्वबोधदर्शनान्विनादतेकुसनविनास्तुतिःप्रशस्ततामुद्विनभ वत्येवसपुमान्देहसंबंधिदुःस्वार्थदेहकनहेतुनाआसक्तयाआवत्ते ॥ तमहेतुर्नास्तीत्यर्थ ॥ ५ ॥ इदानीदेहात्मैक्यभ्रमवारणाययुक्तीप्रसौति ॥ नात्मेत्याविना ॥ जडचित्वाभ्या विरुद्धयोर्देहात्मनोराधाराधेयभावादिसंबंधोपिदुर्लभस्तावात्यतदूरनिरस्तमित्याशय ॥ ६ ॥ एवनिर्विकारत्वसविकारत्वाविकृतविरोधावपिनतत्संसक्तिरित्याह ॥ सर्वेरिति

यस्याज्ञानात्मनोज्ञस्यदेहएवात्मभावना ॥ उदितेतिरुपेवाक्षरिपवोभिभवतितम् ॥ ३ ॥ यस्यज्ञानात्मनोज्ञस्यसत्येवात्मनिसस्थिति ॥ सतुष्टैवाक्षसुहृदोनप्रतितमर्निंदितम् ॥ ४ ॥ पदार्थेस्फुरतोयस्यनस्तुतिर्निंदनाहते ॥ सदेहंदेहदु स्वार्थमादत्तेकेनहेतुना ॥ ५ ॥ नात्माशरी रसंबंधीशरीरमपिनात्मनि ॥ मिथोविलक्षणावेतौप्रकाशतमसीयथा ॥ ६ ॥ सर्वैर्भावविकारैस्तुनित्योन्मुक्तस्त्वलेपक ॥ नात्मात्तमेति भगवान्नचोदेतिसदोदित ॥ ७ ॥ जडस्याज्ञस्यतुच्छस्यकृतघ्नस्यविनाशिन ॥ शरीरकोपलस्यास्यद्रवत्यस्तुतत्तथा ॥ ८ ॥ आदत्तेत त्कथंनित्यचिन्मयत्वसदोदितम् ॥ ययोरेकपरिज्ञानेजडतैवापरस्थिता ॥ ९ ॥ तयो कीदृग्विधाभूतासमानसुखदु खता ॥ यौसमौसम धर्माणौनकदाचनतौकथम् ॥ १० ॥ यावप्यसक्तावन्योन्यमिथ संनमितौकथम् ॥ कथंस्थूलोणुरूप स्यादणु स्थूल कथंभवेत् ॥ ११ ॥ एकोदयेद्वितीयस्यनसत्ताविनिराश्रयो ॥ ज्ञानेनाज्ञानतामेतिच्छायानायातितापताम् ॥ १२ ॥ सद्व्रजनासद्भवतिविश्विज्ञास्वपिदृष्टि षु ॥ मनागपिनसश्लेप सर्वगस्यापिदेहिन ॥ १३ ॥

॥ ७ ॥ आत्माधीनत्वमथोपकारप्राप्यात्मनएवदु खभोजकत्वात्कृतघ्नत्व ॥ ८ ॥ ननुचिन्मयत्वमपिदेहस्यैवधर्मोस्तुतथाचनकोपिविरोधइत्याशंक्याह ॥ आदत्तेइति ॥ जड स्यात्तत्तिरस्कृत्यपरिधीयनदेहस्यचिन्मयत्वज्ञातुंशक्यन्तत्परिचयेचजडतैवअपरस्यदेहस्यस्थितेतितत्स्वभावविरुद्धंचिन्मयत्वंकथमादत्तेइत्यर्थ ॥ ९ ॥ नन्वात्मनोमानस दु खभोगेनदेहेकार्श्यआयमानंदरयतेदेहेषणाद्यभावेविनाआत्मनोदु खभोगइतितयो समानसुखदु खतादर्शनात्तादात्म्यंकिनस्यादित्याह ॥ तयोरिति ॥ यौआत्मदेहौवक्ष्यमाण पिता वियसमौअविविक्तौपरस्परधर्मविनिमयात्समधर्माणौभासेते विविक्तौतुतौनकदाचनतथाभासेते तयो कीदृग्विधाकथंचसमानसुखदु खताभूतापरमार्थसत्याकुतोस्त्येत्यर्थ ॥ १० ॥ किंच असंगेनपरमसूक्ष्मेणआत्मनास्थूलस्यदेहस्यसंगमएवदुर्लभोदूरेऐक्यमित्याह ॥ यावपीति ॥ ११ ॥ परस्परोपघातित्वभावत्वादपिनैक्यमसक्तिरित्याह ॥ एकेति ॥ १२ ॥ सद्व्रजअसदेहादिरूपनभवति ॥ सतस्वदेहिनोदेहाधिष्ठानप्रतीच स्वाप्यत्तेनदेहादिनामनागपिनसंश्लेष ॥ १३ ॥

१ समासांतश्छांदस

उक्तमेवदृष्टांतोपदर्शनायपुनराह ॥ देहेनेति ॥ कुतोनसश्लेपस्तत्राह ॥ देहसत्तयेति ॥ देहकल्पनाधिष्ठानसन्मात्रस्वरूपतयेत्यर्थः ॥ तथाचोक्तंभगवत्पादैर्यत्रहियदध्यासस्तत्कृते
नगुणेनदोषेणवाअणुमात्रेणापिसनसंबध्यतइति ॥ १४ ॥ अतद्वृत्तेःअलेपकत्वात्तद्विलक्षणस्वभावस्यांबरस्यवायुतोयथाशोषकपरजोलेपादयोदोषानसंतितद्वद्देहादितआत्म
नोजरादयोमनागपिनसंतीत्यर्थः ॥ १५ ॥ देहतयादेहात्मदृष्ट्यास्थितोऽपिमरणजन्मादिभ्रमोब्रह्मात्मदृष्ट्याब्रह्मणिअप्सुवीचिचयइवब्रह्ममात्रोदृश्यतेइत्यर्थः ॥ १६ ॥ १७॥
यथापय स्वसत्तयैवस्थितमूर्मित्वमनुभवतीवतद्वत ॥ यथाप्रतिबिंबस्यआधारस्पंदनेनहेतुनाक्षोभेसतिसूर्यादेर्मनागपिक्षोभोनास्तितथादेहेनचिदाभासक्षोभेपिदेहिनोदेहसाक्षिण
इत्यर्थः ॥ १८ ॥ सम्यग्दृष्टेनुवस्तुन्येवस्थितिरभिजायतेदेहमयोऽज्ञानविभ्रमश्चलयमेति ॥ १९ ॥ यथाभूतार्थयोर्विमर्शेनिष्कृष्टपरमार्थस्वभावयोर्देहतत्साक्षिणोर्ज्ञानाद्देह

देहनदेहगस्यापिकमलस्येववारिणा ॥ मनागपिनसंश्लेपोब्रह्मणोदेहसत्तया ॥ १४ ॥ तद्वतस्याप्यतद्वृत्तेरंबरस्येववायुतः ॥ जरामरण
मापच्चसुखदुःखेभवाभवौ ॥ १५ ॥ मनागपिनसंतीहतस्मात्त्वंनिर्वृतोभव ॥ स्थितोदेहतयाप्युच्चैःपातोत्पातमयोभ्रमः ॥ १६ ॥ दृश्यते
केवलंब्रह्मण्यप्सुवीचिचयोयथा ॥ आत्मसत्तोपजीवित्वादात्मानुभवतीहहि ॥ १७ ॥ देहयंत्रंपयःसत्तामात्रादूर्मिमिवस्थितम् ॥ आ
धारस्पंदनेनांगयथाक्षोभोनवाभवः ॥ १८ ॥ सूर्यादेःप्रतिबिंबस्यतथादेहेनदेहिनः ॥ सम्यग्दृष्टेयथाभूतेवस्तुन्यवाभिजायते ॥ १९ ॥
स्थितिर्देहमयोज्ञानविभ्रमोलयमेतिच ॥ देहदेहवतोर्ज्ञानाद्यथाभूतार्थयोःस्थितिः ॥ २० ॥ सत्तासत्तात्मिकोदेतिदीपाद्दीपपदार्थयोः ॥ अ
सम्यग्दर्शिनोदेहस्यावर्त्तपरिवर्त्तनैः ॥ २१ ॥ अंतःशून्याःस्फुरंतीहतेमोहार्जुनपादपाः ॥ अपर्यालोचितात्मार्थाअपरामृष्टसंविदः ॥ २२ ॥
स्पंदंतेचेतितान्मुक्तास्तृणवन्मूढबुद्धयः ॥ अनास्वादितचित्तत्वाज्जडाःसर्वेखवायुभिः ॥ २३ ॥

स्यामत्तात्मिकातत्साक्षिणश्चसत्तात्मिकास्थितिरुदेतिप्रकटीभवति ॥ २० ॥ दीपेनाद्यतेयस्यतइतिदीपात्तमःप्रदीपश्चतादृशयोःपरस्परोत्थितिस्वभावपदार्थभूतयोरित्यर्थः ॥
इदानीमज्ञस्यजगद्दर्शनप्रकारानिदितुप्रपचयति ॥ असम्यग्दर्शिनइत्यादिना ॥ २१ ॥ २२ ॥ चेतिताचेतनतातयोन्मुक्ता. ॥ भावेघञंतान्चितेर्मत्वर्थेइनिस्ततस्तल् ॥ नत्सचे
तनदेहात्मशून्याश्चेतनाइतिवक्तुयोग्याइतिभावः ॥ यदितेअचेतनास्तर्हिंकथवदंतितृणकाष्ठाहरणादिनाव्यवहरंतिचतत्राह ॥ अनास्वादितेत्यादिना ॥ तेसर्वेजडाअपिखैर्मुखनासि
कादिच्छिद्रैस्तत्संचारिभिर्वायुभिश्चयत्रयत्रप्रदेशेकीचकवद्दुदितेननोदनेनआक्रातास्तत्ररटतिप्रस्फुरंतिसंचरंतिचेतिपरेणान्वयः ॥ २३ ॥

---

१ देहिनःक्वापीतिपाठ.   २ महाभ्रमइत्यपिपाठः   ३ इदमधंपूर्वान्वयि   ४ सर्वपुस्तकेषुमूलेअसम्यग्ज्ञानिनइतिपाठोदृश्यते

मप्रातीर्थोनृणामिंद्रियजयासामर्थ्यांतेराक्ष्यमाणस्यमनसःपूर्णात्मनिष्ठतिशाकथस्याविति जिज्ञासौलिंगैरुपलक्ष्य यस्तुविज्ञानवान्भवत्ययुक्तेनमनसासदा ॥ तस्येंद्रियाण्यव
श्यानिदुष्टाश्वाइवसारथे ॥ यस्तुविज्ञानवान्भवतियुक्तेनमनसासदा ॥ तस्येंद्रियाणिवश्यानिसदश्वाइवसारथेरितिश्रुतिद्वयोक्तदिशैवतांक्रमेणपरिहरति ॥ यस्येतिद्वाभ्याम् ॥ इ
त्यनस्मारेवासरात्मभावेनापराधारतिम्पाअक्षाणिरिपवःशत्रवोभूत्वातमक्षमभिभवतिपराभावयंति ॥ ३ ॥ सतुस्यासत्यात्मदर्शनोपकारजनितसंतोषेणेवअक्षाणिसुहृदोभिभा
विभूत्वानर्थनिर्मिकनुसानाभिरस्यानुकूलाचरणेनपालयंतीत्यर्थः ॥ ४ ॥ स्फुरतोभ्यवहरतोयस्यपुंसोभोग्यपदार्थेसर्वविषयोपदर्शनान्निंदनादनेकुत्सनविनास्तुतिःप्रशस्तताबुद्धिनभ
वन्येवमनुमानेदेहमपविदुःस्वार्थंदेहकेनहेतुनाआत्मतयाआदत्ते ॥ तमहेतुर्नास्तीत्यर्थः ॥ ५ ॥ ज्ञानविज्ञासीयस्यभ्रमवारणाययुक्तीःप्रस्तौति ॥ नात्मेत्याविना ॥ जडचित्त्वाभ्यां
गिन्द्रयोर्देहात्मनाराधागधेयभायाविसंबंधोपिदुर्लभमात्मास्यंतदूरनिरस्तमित्याशयः ॥ ६ ॥ एवनिर्विकारत्वसविकारत्वादिरूपविरोधावपिनतयसन्निरित्याह ॥ सर्वैरिति

यस्याज्ञानात्मनोज्ञस्यदेहएवात्मभावना ॥ उदितेतिरुपेवाक्षरिपवोभिभवतितम् ॥ ३ ॥ यस्यज्ञानात्मनोज्ञस्यसत्येवात्मनिसंस्थिति ॥
सतुस्यैवाक्षसुहृदोनप्रतितमनिंदितम् ॥ ४ ॥ पदार्थस्फुरतोयस्यनस्तुतिर्निंदनाद्दते ॥ सदेहदेहकुःस्वार्थमादत्तेकेनहेतुना ॥ ५ ॥ नात्माशरी
रसंबंधीशरीरमपिनात्मनि ॥ मिथोविलक्षणावेतौप्रकाशतमसीयथा ॥ ६ ॥ सर्वैर्भावविकारैस्तुनित्योन्मुक्तस्त्वलेपकः ॥ नात्मास्तमेति
भगवान्नचोदेतिसदोदितः ॥ ७ ॥ जडस्याज्ञस्यतुच्छस्यक्षतप्रस्याविनाशिनः ॥ शरीरकोपलस्यास्यद्रवत्यसुतत्तया ॥ ८ ॥ आदत्तेत
त्कथंनित्यश्चिन्मयत्वसदोदितम् ॥ ययोरेकपरिज्ञानेजडतैवापरस्थिता ॥ ९ ॥ तयोः कीदृग्विधाभूतासमानसुखदुःखता ॥ यौसमौसम
धर्माणौनकदाचनतौकथम् ॥ १० ॥ यावप्यसक्तावन्योन्यंमिथःसनमितौकथम् ॥ कथंस्थूलोणुरूपस्यादणु स्थूल कथंभवेत् ॥ ११ ॥
एकोदयेद्वितीयस्यनसत्तादिनरात्र्योः ॥ ज्ञानेनाज्ञानतामेतिच्छायानायातितापताम् ॥ १२ ॥ सद्भसनासद्भवतिविचित्रास्वपिदृष्टि
षु ॥ मनागपिनसंश्लेषः सर्वगस्यापिदेहिनः ॥ १३ ॥

॥ ७ ॥ आत्माधीनत्वमयोपकारप्राप्त्यात्मनएवसुखभोजकत्वात्कृतप्रस्य ॥ ८ ॥ ननुचिन्मयत्वमपिदेहस्यैवधर्मोस्तुतथाचनकोपिविरोधइत्याशंक्याह ॥ आदत्तेइति ॥ जड
स्यासत्तिविरस्वरूपमपरिचीयनदेहस्यचिन्मयत्वंज्ञातुंशक्यतत्परिचयचजडतैवअपरस्यदेहस्यस्थितेतिमरस्वभावविरुद्धंचिन्मयत्वंकथमादत्तेइत्यर्थः ॥ ९ ॥ नन्वात्मनोमानस
सुखभोगेनदेहकार्यजायमानदरपतेदेहेषताडनादिनाआत्मनोदुःखभोगइतितयोःसमानसुखदुःखतादर्शनात्तादात्म्यंकिनस्यादित्याह ॥ तयोरिति ॥ यौआत्मदेहौप्रकाशतमसीइव
विषमौअविविक्तौपरस्परधर्मविनिमयात्समधर्माणौभासेते विविक्तौतुतौमिथःसंयुक्तनतयाभासेते तयोःकीदृग्विधाकथंचसमानसुखदुःखताभूतापरमार्थसत्यावक्तुशक्येत्यर्थः
॥ १० ॥ किंच असंगेनपरमसूक्ष्मेणआत्मनास्थूलस्यदेहस्यसंगमएवदुर्लभोदूरेऐक्यमित्याह ॥ यावपीति ॥ ११ ॥ परस्परोपघातिस्वभावत्वादपिनैक्यप्रसक्तिरित्याह ॥
एकेति ॥ १२ ॥ सद्भसअसद्देहादिरूपंनभवति ॥ सतश्चदेहिनोदेहाधिष्ठानप्रतीपःस्वाध्यस्तेनदेहादिनामनागपिनसंश्लेषः ॥ १३ ॥

१ यथाज्ञानमस्त्वरम

उक्तमेवदृष्टांतोपदर्शनायपुनराह ॥ देहेनेति ॥ कुतोनसश्लेषस्तत्राह ॥ देहसत्तयेति ॥ देहकल्पनाधिष्ठानसन्मात्रस्वरूपतयेत्यर्थः ॥ तथाचोक्तंभगवत्पादैर्यत्रहियदध्यासस्तत्कृते नगुणेनदोषेणवाअणुमात्रेणापिसनसबध्यतइति ॥ १४ ॥ अतद्वृत्तेःअलेपकत्वात्तद्विलक्षणस्वभावस्यांबरस्यवायुतोयथाशोषकपरजोलेपादयोदोषानसतितद्वद्देहादितआत्म नोजरादयोमनागपिनसतीत्यर्थ ॥ १५ ॥ देहतयादेहात्मदृष्ट्यास्थितोऽपिमरणजन्मादिभ्रमोब्रह्मात्मदृष्ट्याब्रह्मणिअप्सुवीचिचयइवब्रह्ममात्रोदृश्यतेइत्यर्थः ॥ १६ ॥ १७॥ यथापयःस्वसत्तयैवस्थितमूर्मित्वमनुभवतीवतद्वत् ॥ यथाप्रतिबिंबस्यआधारस्पंदनेनहेतुनाक्षोभेसतिसूर्यादेर्मनागपिक्षोभोनास्तितथादेहेनचिदाभासक्षोभेपिदेहिनोदेहसाक्षिण इत्यर्थः ॥ १८ ॥ सम्यग्दृष्टेतुवस्तुन्येवस्थितिरभिजायतेदेहमयोऽज्ञानविभ्रमश्चलयमेति ॥ १९ ॥ यथाभूतार्थयोर्विमर्शोनिष्कृष्टपरमार्थस्वभावयोर्देहतत्साक्षिणोर्ज्ञानादेह

देहेनदेहगस्यापिकमलस्येववारिणा॥ मनागपिनसंश्लेषोब्रह्मणोदेहसत्तया ॥ १४ ॥ तद्वतस्याप्यतद्वृत्तेरंबरस्येववायुतः॥ जरामरण मापच्चसुखदुःखेभवाभवौ ॥ १५ ॥ मनागपिनसंतीहतस्मात्त्वंनिर्वृतोभव ॥ स्थितोदेहतयाप्युच्चैःपातोत्पातमयोभ्रमः ॥ १६ ॥ दृश्यते केवलंब्रह्मण्यप्सुवीचिचयोयथा॥ आत्मसत्तोपजीवित्वादात्मानुभवतीहहि ॥ १७ ॥ देहयंत्रंपयःसत्तामात्रादूर्मिमिवस्थितम्॥ आ धारस्पंदनेनांगयथाक्षोभोनवाभवः॥ १८ ॥ सूर्यादेःप्रतिबिंबस्यतथादेहेनदेहिनः॥ सम्यग्दृष्टेयथाभूतेवस्तुन्येवाभिजायते॥ १९॥ स्थितिर्देहमयोज्ञानविभ्रमोलयमेतिच॥ देहदेहवतोर्ज्ञानाद्यथाभूतार्थयोःस्थितिः॥ २०॥ सत्तासत्तात्मिकोदेतिदीपाद्दीपपदार्थयोः॥ अ सम्यग्दर्शिनोदेहस्यावर्त्तपरिवर्त्तनैः॥ २१॥ अंतःशून्याःस्फुरंतीहतेमोहार्जुनपादपाः॥ अपर्यालोचितात्मार्थाअपरामृष्टसंविदः॥ २२॥ स्पंदंतेचेतितोन्मुक्तास्तृणवन्मूढबुद्धयः॥ अनास्वादितचित्तत्वाज्जडाःसर्वेखवायुभिः ॥ २३ ॥

स्यासत्तात्मिकातत्साक्षिणश्चसत्तात्मिकास्थितिरुदेतिप्रकटीभवति ॥ २० ॥ दीपनाद्यतेयस्यतइतिदीपात्तमःप्रदीपश्चतादृशयोःपरस्परोत्थितिस्वभावपदार्थभूतयोरित्यर्थः ॥ इदानीमज्ञस्यजगद्दर्शनप्रकारानिदितुप्रपचयति ॥ असम्यग्दर्शिनइत्यादिना ॥ २१ ॥ २२ ॥ चेतिताचेतनतातयोन्मुक्ताः ॥ भावेघजताच्चितेर्मत्वर्थेइनिस्ततस्तल् ॥ नह्यचे तनदेहात्मभूताश्चेतनाइतिवक्तुंयोग्याइतिभाव ॥ यदितेअचेतनास्तर्हिकथंवदतितृणकाष्ठाहरणादिनाव्यवहरतिचतत्राह ॥ अनास्वादितेत्यादिना॥ तेसर्वेजडाअपिखैर्मुखनासि कादिच्छिद्रैस्तत्संचारिभिर्वायुभिश्चयत्रयत्रप्रदेशेकीचकवदुदितेननोदनेनआक्रांतास्तत्रटतिप्रस्फुरंतिसचरतिचेतिपरेणान्वयः ॥ २३ ॥

---

१ देहिन.कापीतिपाठः    २ महाभ्रमइत्यपिपाठः    ३ इदमर्धपूर्वान्वयि    ४ सर्वपुस्तकेषुमूलेअसम्यग्ज्ञानिनइतिपाठोदृश्यते

॥ २४ ॥ शब्दस्पर्शसहितरूपादिविषयलाभैर्नेवआत्मा कृतार्थमन्या ॥ स्फारोरसोभोगाभिनिवेशएवआसवमिवोन्मादकायेषाम् ॥ २५ ॥ यथानघादिमहौघाअचेतना अविविहारागमापायादिचेष्टासहितास्तद्वद्धियोपिकिमपामात्मविन्नास्त्येव न किंतुविषमानाप्यबोधाद्यर्थाऽसपन्नेत्याह ॥ सर्वेषामिति ॥ २६ ॥ अज्ञानमूर्खांत ॥ नि सर स्पदनिरोध ॥ २७ ॥ जठराग्निसंदमाधार्थम ॥ एवमूढान्निष्पद्यमानपरतजनगजनघनचेतनतादिगमरणाद्यनर्थमात्रहेतुत्वाज्ञनुगुणविस्फारषवित्याह ॥ तजनमिति ॥ २८॥

यन्नतन्नोदिताक्रांतारंतिप्रस्फुरतिच ॥ तृणकाष्ठादिकसर्वमाहरतित्यजंतिच ॥ २४ ॥ सशब्दस्पर्शरूपाढ्यास्तरगतरलांगका ॥ जडा सत स्फुरद्भ्रमास्फाररसासवा ॥ २५ ॥ सविहारागमापायामहौघाइवद्रुद्धिय ॥ सर्वेषामेवचैतेषांस्थितेर्वैषाचिद्व्यया ॥ २६ ॥ किंत्वबोधवशादस्या परांरूपणतांगता ॥ श्वाससततयोत्थज्ञालोहकारदृतेर्यथा ॥ २७ ॥ स्पंदमात्रायमेवाशुद्दस्तेनार्थकारिण ॥ तर्ज नगजनमूढाद्धनुर्दंडगुणादिव ॥ २८ ॥ श्रूयतेमरणायैवचिद्बोधपरिवर्जितम् ॥ फलभोगोपियोमूढात्तदरण्यतरोरिव ॥ २९ ॥ तस्मिन्विश्र मणयत्तच्छिलाफलहकेयथा ॥ तेनयत्संगम सस्यात्स्याणुनाभुविजगले ॥ ३० ॥ तदर्थंयत्कृतंकिंचित्तद्व्योमलकुटैर्हतम् ॥ तस्मिन्यद धमेदत्तंतरत्यक्तकिंनकर्दमे ॥ ३१ ॥ तेनसार्द्धंकथायत्तत्कौलेयाक्रानमघरे ॥ अज्ञानमापदांनिष्ठाकाहिनापदजानत ॥ ३२ ॥ इयससा रसरणिवहत्यज्ञप्रमादत ॥ अज्ञस्योग्राणिदु खानिसुखान्यपिदृढानिच ॥ ३३ ॥ पुन पुनर्निवर्ततेयुगप्रत्यचलाइव ॥ शरीरधनदारादा वास्यासमनुवभ्रत ॥ ३४ ॥ इदद्दु खमज्ञस्यनकदाचनशाम्यति ॥ अनात्मनिशरोठदेहेआत्मभावमुपेयुषि ॥ ३५ ॥ असद्बोधमयीमाया कथनामापिनश्यति ॥ दुर्भावस्वपितधियोवस्तुन्यंधस्यदुमते ॥ ३६ ॥ अवस्तुनिसनेत्रस्यलुठतश्चपदेपदे ॥ विषमुत्पद्यतेचंद्रादामो द कुसुमादिव ॥ ३७॥

फलभोग फललाभ ॥ २९ ॥ शिलाफलहकेस्मशिलाफलकेयथातथा ॥ स्याणुनाछिन्नतरुमूलेन ॥ ३० ॥ कृतमुपकृतस्तेनतत् ॥ लकुटैर्दंडै ॥ हततार्डितम ॥ ३१ ॥ कौ लेय श्वा ॥ कुलकुक्षीत्याविनाविहितस्यकर्म फलोपभ्छोरस ॥ दरमर्शनिरनमज्ञानस्यऐयतापवरानार्थरयपयानत्वप्रेपुवेषादित्याशयेनाह ॥ अज्ञानमिति ॥ ३२ ॥ ३३ ॥ युगयुगोपलक्षितलांगलंरयथामतिअचलाइवदृढानिदुरुच्छेदनानिच ॥ ३४ ॥ ३५ ॥ दुष्टैर्भावि सुषुप्तिपिताभ्यामाधीर्यस्य ॥ ३६ ॥ अवस्तुन्यसद्वस्तुनिसनेभस्यपश्यतइति पावत ॥ ३७ ॥

१ मद्यादन्यस्यपिकचित्पाठ

पयस क्षीरात्कटकश्चएतिआगच्छतिउत्पद्यतइतियावत् ॥ देहलक्षणस्यशाल्मले.कोटरेनिवसंत्योभोगिन्यःसर्पिणीभूताआशाःप्रसूयंतेरागलोभदैन्यादिसर्पान् ॥ अथवामनो मातंगस्यशृंखलाभूताआशाद्दु खानिप्रसूयतेइतिआतरबाह्यविषयभेदेनाशाभेदप्रकल्प्यरूपकद्वययोज्यम् ॥ ३८ ॥ सुकृष्टात्क्षेत्रात् ॥ नविद्यतेज्ञानयस्यस अज्ञानस्तंनरक श्री'परिपालयतिप्रतीक्षते ॥ ३९ ॥ ४० ॥ हृदिमनोलक्षणायासद्भूमौ ॥ ४१ ॥ तरुच्छद'पल्लवस्तत्स्थानापन्नयोःस्फुरदोष्ठयोर्लसतोनिःश्वासधूमायस्य ॥ शस्त्रजालमिवकट कटायमानारदादताएवोल्मुकायस्य ॥ द्वेषएवदावाग्निर्यस्य ॥ हृन्मनस्तल्लक्षणेमरौनिर्जलारण्येज्वलतिभस्मीभवतीव ॥ ४२ ॥ मात्सर्यजलपूर्णेमनसिमानसे ॥ मात्सर्यमान

कंटकश्चैतिपयसोदूर्वांकुरइवस्थलात् ॥ देहशाल्मलिभोगिन्योमनोमातंगशृंखलाः ॥ ३८ ॥ अज्ञस्याशाःप्रसूयंतेसुकृष्टादिवशालयः ॥
नरकश्रीरिहाज्ञानंदुष्कृतव्यालवेष्टितम् ॥ ३९ ॥ परिपालयतिप्रीतामयूरीवारिदंयथा ॥ नेत्रलोलालिनीलोलास्फुरिताधरपल्लवा ॥ ४० ॥
मूर्खार्थमेवविकसत्यंगनाविषवल्लरी ॥ अज्ञस्यहृदिसद्भूमावेवपेलवपल्लवा ॥ ४१ ॥ विद्यतेपतगच्छायोरागविद्रुमदुर्द्रुमः ॥ तरुच्छद
लसद्धूमःशस्त्रजालरदोल्मुकः ॥ ४२ ॥ ज्वलतिद्वेषदावाग्निर्हृन्मरौकायतापदः ॥ अज्ञमात्सर्यमनसिपरापवदनच्छदा ॥ ४३ ॥ ईर्ष्याक
मलिनीचिंताषट्पदाविलसत्यलम् ॥ प्रतिजन्मप्रमृष्टोग्रदुःखकल्लोलविभ्रमम् ॥ ४४ ॥ जडमेवसमभ्येतिपुनर्मरणवाडवः ॥ जन्मबाल्यं
व्रजत्येतद्यौवनंयुवताजराम् ॥ ४५ ॥ जरामरणमभ्येतिमूढस्यैवपुनःपुनः ॥ जगज्जीर्णारघट्टेस्मिन्नज्ञवासंस्तृतिरूपया ॥ ४६ ॥ मज्जनोन्म
ज्जनैरज्ञोयंत्रेकलशतांगतः ॥ यदेवगोष्पदापूरंज्ञधियःपेलवंजगत् ॥ ४७ ॥ तदेवापारपर्यंतमगाधममहात्मनः ॥ धियोदृशइवाज्ञस्यदी
र्घजठरकोटरात् ॥ ४८ ॥ नप्रयांत्यपरंपारंविहंग्यःपंजरादिव ॥ भावमात्रपरावृत्तवासनाभारनाभयः ॥ ४९ ॥

सेऽज्ञस्येतिपाठःसाधुः ॥ ४३ ॥ प्रमृष्टानानाप्रतीकारोपायवेलोपसर्पणेनमार्जिताउग्रदुःखकल्लोलविभ्रमायत्रतंजडमज्ञंजलमयंसमुद्रंचमरणलक्षणोवाडवोवडवानलः ॥ ४४ ॥ जन्मादीनामुत्तरोत्तरमनर्थप्रापकत्वमेवेत्याह ॥ जन्मेति ॥ ४५ ॥ आरघट्टेयन्त्रेघटीयन्त्रे ॥ ४६ ॥ गोष्पदमापूरयतीतिगोष्पदापूरम् अल्पजलप्रायमित्यर्थः ॥ ४७ ॥ अमहात्मनः परिच्छिन्नदेहात्मदर्शिन.अपारपर्यंतमगाधचभवतिअतःअदृशःअधस्येवअज्ञस्यधियोजठरकोटरादुदरभरणासक्तिबंधनवशादपरदीर्घससाराब्धिपारनप्रयातीत्यन्वयः ॥ ४८ ॥ कुतोनप्रयातितत्राह ॥ भावेत्यादिना ॥ परांचिखानिव्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यतिनांतरात्मन्निति श्रुतेर्बाह्येषुविषयमात्रेषुपरावृत्तवासनाभाराक्रांतहृदयनाभयःसत्योवि षयपंकेषुमग्नाजन्मचक्रस्यनेमयोनेमिस्थानीयेंद्रियगणाउद्धृत्यस्पष्टीकर्तुंशोधयितुनशक्यते ॥ ४९ ॥

॥ २४ ॥ शब्दस्पर्शरूपादिविषयलाभैनैवआक्या कृतार्थमन्या ॥ स्फारोरसोभोगाभिनिवेशएवआसवमिवोन्मादकायेषाम् ॥ २५ ॥ यथानघादिमहौघाअचेतना अपिविहारागमापायादिचेष्टासहितास्तद्बुधियोपिकिमपामालषिन्चास्सेव न किंतुविषमानाप्यबोधाख्यार्थसंपन्नेत्याह ॥ सर्वेषामिति ॥ २६ ॥ अज्ञानात्मूर्खात् ॥ नि सर स्यद्गतिरोध ॥ २७ ॥ जठराग्निस्पंदमात्राथम ॥ एवमूढान्निष्पद्यमानपरतर्जनगर्जनघनघतनताडिगमरणाघनर्थमात्रहेतुत्वाद्धनुर्गुणविस्फारवदित्याह ॥ तर्जनमिति ॥ २८॥

यन्नतन्नोदितात्कांतारदंतिप्रस्फुरतिच ॥ तृणकाष्ठादिकसवमाहरतित्यजतिच॥ २४ ॥ सशब्दस्पर्शरूपाढ्यास्तरंगतरलांगका ॥ जडा संत स्फुरद्रूपाश्शस्फाररसासवा ॥ २५ ॥ सविहारागमापायामहौघाइवदुर्धियः ॥ सर्वेषामेवचैतेषांस्थितेर्वैपाचिद्ध्यया ॥ २६ ॥ किंत्वबोधवशादस्यापरांकृपणतांगता ॥ श्वाससततयोत्थप्राह्णोहकारस्रुतेर्यथा ॥ २७॥ स्पंदमात्रार्थमेवाज्ञहस्तेनाघकारिण ॥ तर्ज नगजनंमृताद्धनुर्दंडगुणादिव ॥ २८॥ श्रूयतेमरणायैवचिद्बोधपरिवर्जितम् ॥ फलभोगोपियोमूढात्तदरण्यतरोरिव ॥ २९॥ तस्मिन्विश्र मणंयत्ताच्छिलाफलहकेयथा ॥ तेनयत्संगम सस्यात्स्याणुनाभुविजगले ॥ ३० ॥ तदर्थयत्कृतंकिंचित्तच्छ्वोमलकुटेहृतम् ॥ तस्मिन्यद् धमेदत्तंतस्यक्तफिनकर्दमे ॥ ३१ ॥ तेनसार्द्धंकथायत्तत्कौलेयाह्वानमंबरे॥ अज्ञानमापदांनिष्ठाकाहिनापदजानत ॥ ३२ ॥ इयंससा रसरणिर्वहत्यज्ञप्रमादत ॥ अज्ञस्योग्राणिदु खानिसुखान्यपिद्वानिच ॥ ३३॥ पुन पुनर्निवर्ततेयुगंप्रत्यचलाइव ॥ शरीरधनदारादा वास्थासमनुबध्नत ॥ ३४ ॥ इवद्दु खमज्ञस्यनकदाचनशाम्यति॥ अनात्मनिशठेदेहेआत्मभावमुपेयुषि ॥ ३५॥ असद्बोधमयीमाया कथनामापिनश्यति ॥ दुर्भावस्वपितधियोवस्तुन्यंधस्यदुर्मते ॥ ३६ ॥ अवस्तुनिसनेत्रस्यलुठतश्चपदेपदे ॥ विपमुत्पद्यतेचंद्रादामो द‍्कुसुमादिव ॥ ३७॥

फलभोम फललाभ ॥ २९ ॥ शिलाफलहकेसमशिलाफलकेयथातया ॥ स्याणुनाछिन्नतरुमूलेन ॥ ३० ॥ कृतमुपकृतस्वेनतत् ॥ छकुटैर्दंडै ॥ हृतनाशितम् ॥ ३१ ॥ कौ लेय श्वा ॥ कुलकुक्षीस्याविनाविहितस्यकस्य फलोपश्लोकस ॥ दत्तमज्ञानिवनमज्ञानस्यदेयतापदानार्थवययानत्वकेपुदेयादित्याशयेनाह ॥ अज्ञानमिति ॥ ३२ ॥ ३३ ॥ युगंयुगोपलक्षितलांगलरयमामतिअचलाइवदृढानिदुरुच्छपनानिच ॥ ३४ ॥ ३५ ॥ दुष्टेर्भावि स्वपुअपिताभ्यामाधीर्यस्य ॥ ३६ ॥ अवस्तुन्यसद्वस्तुनिसनेत्रस्यपश्यतइति पावम् ॥ ३७ ॥

१ पद्मावतरस्यपिकचित्साठ

कामादिभिरनर्थादिष्वर्थतारम्यतावहा ॥ विस्तरेणात्रवर्ण्यंतेअज्ञानस्यविभूतय ॥ १ ॥ तत्रसर्वविवेकापहारिण्यःसद्योनर्थगर्तपातिन्य प्रस्तुता स्त्रियएवाज्ञानस्यकामस्यच महाविभूतयइत्याशयेनताएवप्रथमवर्णयति ॥ यदित्यादिना ॥ अस्ययच्छब्दस्यसर्वेषुश्लोकेषुप्रतिवाक्यसबध्यमानस्यसप्तषष्टितमेसर्गोपात्यश्लोकार्धेतदज्ञानविजृंभितमि त्यत्रसबध. ॥ मदलक्षणेइंदौउदितेसतियोषित क्षुब्धस्यकामक्षीरार्णवस्योर्मयइवयद्भांतितदज्ञानस्यविजृंभितविभूतिरितिप्रतिवाक्यंयोज्यम् ॥ १ ॥ यद्धारयतितदप्यज्ञानविजृंभितम् ॥ २ ॥ मधौवसतेवनखडेषुतरुषुभूमौच ॥ मनोभुवोदासाआज्ञाप्याइव ॥ कृतमदा कामिनाजनितोन्मादाः ॥ ३ ॥ क्रव्यादा क्रव्यमात्राहाराश्चाग्राद्य ॥ गृध्रगोमाय्वादयस्तुलाभेअन्नाद्यप्यश्नतीतिपुनर्ग्रहणम् ॥ ४ ॥ रक्तपूतिगधएवसुगधोयस्यास्तथाविधास्त्रीणास्तनश्रेणि सौवर्णकलशादिवद्यद्दृश्यतेतदज्ञानविजृंभितम् ॥ ५ ॥ इ

॥श्रीवसिष्ठउवाच॥ ॥यन्मुक्तावलितारत्नभूषिताभांतियोषितः॥ मदेंदावुदितेक्षुब्धकामक्षीरार्णवोर्मयः॥ १ ॥सौवर्णांभोजकोशस्थलोलालिपटलश्रियम्॥ धारयंतिदृशःस्त्रीणांकपोलतलदोलिताः ॥ २ ॥ उद्यानवनखंडेषुभूमौकृतमदामधौ॥ दृद्याःसुमनसोभांतिदासाइवमनोभुवः॥ ३ ॥क्रव्यादगृध्रगोमायुकौलेयकवलांगिकाः॥ स्त्रियःसमुपमीयंतेचंद्रचंदनपंकजैः ॥ ४ ॥ सौवर्णकलशांभोजकलिकामातुलुंगवत्॥ दृश्यतेस्त्रीस्तनश्रेणीरक्तपूतिसुगंधिका ॥ ५॥ रसायनेंदुनिस्यंदमधुबिंबासवद्रवैः॥ ओष्ठाभिधोमांसलवोलालाक्तउपमीयते॥ ६ ॥ अल्पाल्पाष्ठीवदाकाराभुजाक्रूरास्थिशंकवः॥ महाबाहुलताशब्दैर्वर्ण्यंतेकविभिःशुभैः ॥ ७॥ कदलीस्तंभसंभारसुंदरीभिस्तथाभृता॥ कुचशोभोचितानंदातोरणालिर्विराजते॥ ८॥ आपातमंदमधुरामध्येद्वंद्वानुबंधिनी॥ शीघ्रावसानविरलालक्ष्मीरप्यभिवांछ्यते॥ ९ ॥समुपैतिमतिर्दुःखंसुखंचशतशाखताम्॥ दुःखशाखास्तुजायंतेनानाकर्मफलाःश्रियः॥ १० ॥

दुनिस्यंदोऽमृतम् ॥ ६ ॥ प्रत्येकंविभज्यदर्शनेअल्पाल्पाअष्ठीवतःपर्वाणितदाकाराश्वभुजाशब्दवाच्या.क्रूराअस्थिशंकवः ॥ ७ ॥ तथाकदलीस्तंभात्त्ववसंभारउरुसामग्रीयासां तथाविधाभिःसुदरीभिर्भृता कुचकलशशोभायाउचितोद्रष्टृनेत्रानदोयस्या सकाशात्तथाविधातोरणालिर्मन्मथागारतोरणस्त्रग्भूताकाचीयद्विराजतेतदप्यज्ञानविजृंभितमिति प्राग्वत् ॥ ८ ॥ आपातेआरंभेमंदानामधुराआपाततोल्पमधुरावा ॥ मध्येव्ययकालेरागद्वेषादिद्वंद्वानुपातिनी ॥ शीघ्रमवसानंक्षयोयस्याः ॥ कतिपयजनेषुदृश्यत्वाद्विरला ॥ ईदृशीलक्ष्मीरपियदभिवाछ्यतेतदितिप्राग्वत् ॥ ९ ॥ यन्मतिर्दुःखसमुपैति यच्चसुखशतशाखतासमुपैति यच्चनानाकर्मफलाःश्रियोदुःखान्येवशाखायासातथाविधाजायते तदपीतिप्राग्वत् ॥ १० ॥

१ सप्तषष्टितमयसर्गोपात्यश्लोकार्धेतस्मिन्

